( प्रविश्य )

**पारिपार्श्वकः** — अहो भाव, किमेवं दैन्यपरिवाहिणी ते प्रार्थनापद्धतिः ?

**सूत्रधारः** — खलकण्टकजटिले दुर्दैवमृगयुपरिविचरिते चास्मिञ्जीवलोकमहारण्ये न खलु वत निर्वृतास्सञ्चरन्ति सज्जनहरिणाः ।

**पारिपार्श्वकः** — न खल्ववगच्छामि ।

**सूत्रधारः** — जानाति भवान् मे दायादकुलम् ?

**पारिपार्श्वकः** — कथं न जानामि । धार्तराष्ट्रकुलमिव पाण्डुपुत्रेषु यद्युष्मासु नित्यमनुबद्धवैरं प्रहरति ।

**सूत्रधारः** — सम्यग्दृष्टं भवता । (सनिःश्वासम् )

ज्ञातेर्भीतिर्भवति नियतं ज्ञातिभावस्तु दुष्टो
ज्ञातिर्दुष्टः स्वयमपि यदि प्रायशः कष्टमेव ।
स्पर्धेर्ष्याभ्यां परुषितमनाः पार्श्वगो रन्ध्रवेदी
काले काले प्रहरति स चेत्तत्र चित्रीयते कः ॥ ४ ॥

केनचित्कालेनास्मद्दायादो रङ्गकुलीरो निजविद्यावैशारद्येन उत यया कयाचन विधया अनियतप्रकृतिं कुटिलं राजश्यालकमाराध्य संप्रति निःसपत्नं मया राजसम्मानोऽनुभवितव्य इति दुरभिमानेन तमेवमृजुवल्कितवरसमभ्यर्थितवानिति श्रूयते ।

**पारिपार्श्वकः** — किमिति ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूत्रधारः — यथा मत्कौशलदर्शनेनानुग्रहः कृतः, तथा मद्भ्रातुस्सुनन्दनस्यापि कलाकौशलमास्वादनीयं राजमान्यैर्भवद्भिरिति ।

पारिपार्श्वकः — कोऽभिप्रायः ? स खल्वस्मान्निजाराधनासमर्थान्दुष्टस्वभावतया निकारयिष्यतीति वा ? आगच्छतु । संप्रीणयामः ।

सूत्रधारः — सखे, न तु मे तथा धीरं मनः स्थिरीभवति । दुस्सङ्कल्पाः प्रायः फलन्त्यस्मिन्नशुभे कलौ युगे । तथा हि —

परिम्लाना साधोरुपचितगुणा दीप्तिरसत-
स्ससतां सन्धा व्यर्थास्सपदि फलवत्यः खलगिरः ।
अपध्वस्तारम्भा अकलुषहृदोऽन्ये तु कृतिनः
कलौ दुर्निस्तारास्सुजनविपदोऽन्यस्य सुतराः ॥ ५ ॥

दुराराध्याश्चैश्वर्यमत्ता नृपशवः प्रतिष्ठामात्रगर्विताः कुटिलस्वभावाः । तदिह व्रजनाथो नश्शरणम् । स यथा दुर्योधनप्रेरितादुर्वाससः पाण्डुसुतानरक्षत्तथा सङ्कटेऽस्मिन्नस्मानपि रक्षतु ।

पारिपार्श्वकः — रक्षिष्यति नूनम् । अपि चास्मदहितानां कुटिलधियां शिक्षणार्थं माधवप्रसादनार्थं च तमेव दुर्वाससं उपाख्यानमाश्रित्य किमपि रूपकं प्रयुङ्क्तामद्य भावः ।

सूत्रधारः — सखे, साधु प्रतिबोधितोऽस्मि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुले महत्यप्पयदीक्षितानां वाग्देवतानित्यविहारभूमौ ।
श्रीत्यागराजाध्वरिणां प्रपौत्रश्चकास्ति यज्ञेश्वरसूरिसूनुः ॥

यस्योद्गातृदशाननं भवदयाभव्योदयं नाटकं
यत्काव्येष्वभिविश्रुते वनलताव्याजोक्तिरत्नावली ।
संगृह्णन्वनपर्व भारततरोस्सोऽयं महालिङ्ग इ-
त्याख्यातः प्रतिराजसूयमकरोद्धर्मोडुपं नाटकम् ॥

तेन ह्यनेन तीर्थेनास्मदनुग्रहार्थं मिलितायाः साहित्य-संप्रदायोद्धारधृतकल्याणव्यवसायायाः विद्वत्परिषदोऽस्यास्सद्यो मनस्समुल्लासं संपादयावः । यतः,

उच्चैःकलावतां नित्यमभिज्ञाराधनं धनम् ।
अस्थिरद्वेषसंमानैरलमेतैः खलैर्हि नः ॥ ८ ॥

( नेपथ्ये )

केन मे हृदयगतं भणितम् ?

**सूत्रधारः** — अये, क एष व्याहरति धीरमधुरस्वरः ? (दृष्ट्वा) हन्त, दृष्टम् । एष खलु विज्ञानभास्वरप्रज्ञो नीतिगहनसन्तमसभिदुरो विदुरः पाण्डवाश्रमस्य नेदीयस्यरण्यभागे समवतरति रथात् । सखे तदेहि, गच्छावः । ( इति निष्क्रान्तौ ) ॥

॥ प्रस्तावना ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( ततः प्रविशति विदुरः । )

विदुरः — केन मे हृदयगतं भणितम् ? सत्यमेवमेवैतत् ।

उच्चैः कलावतां नित्यमभिज्ञाराधनं धनम् ।
अस्थिरद्वेषसंमानैरलमेतैः खलैर्हि नः ॥ ९ ॥

अहो दुर्मतीनां व्यामोहः । अथवा,

सद्योऽनृतं हृदयहारि फलं च सूते
प्रत्यक्षवन्ध्यममनोज्ञमृतं तु नाम ।
तेनार्भका इव निषिद्धरता भ्रमन्तो
मर्त्या व्रजन्ति परितापदशां परस्तात् ॥ १० ॥

(विचिन्त्य) उन्मस्तकदौर्जन्यं तत्खलु प्रेक्षणकमद्यापि मे प्रत्यक्षमिव रणरणकदायि । हा धिक्! ननु दैवतान्यपि किं प्रलीनानि ? तदात्वे खलु,

सन्देहडोलातरलाक्षिगोळेष्ववाक्क्रियेष्वन्वयपूजितेषु ।
धर्मात्मना धर्मसुतेन रुद्धे स्थिते च भीमे स्फुरिताधरोष्ठे ॥

संक्षिप्तगात्रमवरुद्धविलोलनीवि
स्रस्तालकं नृपसभे रुदतीमगत्या ।
आकर्षतः पविशतैरभितर्जयन्ती
दुश्शासनस्य सहसा न ररास किं द्यौः ॥ १२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हन्त भोः, न तावत्प्रविशन्नपि कलिस्सुतरामाहोपुरुषिका-माविरकार्षीत्।

धर्मद्रोहकृतो बहुव्यसनिनो मूर्खाः प्रचण्डा अपि
स्वादुंकारममुं सयानवसना मानुष्यकं भुञ्जते।
ये केचिद्यदि साधवः परमनःपीडामदत्वा मना-
क्स्वार्थनैव परित्यजन्ति विपदस्तेष्वेव संकेतिताः।

धिक्कष्टम्। आकस्मिक्येषा दशापरिवृत्तिः पाण्डुपुत्राणाम्, यत्सत्यमद्यापि मे स्वप्नकथेवाविश्वासयोग्या प्रतिभाति।

राजसूयेन येनेष्टं विनिर्जित्य वसुन्धराम्।
स भीमार्जुनयोर्ज्येष्ठः श्रिया सद्यो वियोजितः॥ १४॥

अथवा ऐश्वर्यपटलप्रावृट्प्रावरणनिर्मुक्ता गुणश्रीरद्यैव किल विशेषेण विद्योतते सन्मनःकमलाकरोल्लासाय। तथा ह्यवितथ-मेतद्यदुच्यते ---

माधुर्यं स्वदते निपीड्य बहुधा काण्डान्यदिक्षोर्जनो
हेम्नस्सारमवैति कर्षणशिलापट्टे निघृष्यैव यत्।
गन्धे दीपयतेऽगुरुं यदपि यत्तक्ष्णोति दीप्त्यै मणिं
तत्पीडामपहाय कुत्रचिदपि प्राप्यो न तत्तद्गुणः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदद्य पुण्यश्लोकं महात्मानं धर्मनन्दनं द्रष्टुं त्वरते मे हृदयम्। (परिक्रामन्) दिष्टया मां निर्वासयामास हितोपदेशश्रवणकातरो धृतराष्ट्रः। यः खलु,

स्तोकं कृपाकुलमना अपि पाण्डवेषु
प्रायोऽभ्यपेक्षितनयानुगमोऽपि मन्त्रैः।
दुर्वृत्तपुत्रकनिकारकथाप्रसक्तौ
भोगी प्रकोपित इव श्रयते विकारम् ॥ १६ ॥

अथवा सुदुर्निरस एव प्रज्ञावतामपि पक्षपातग्रहः पुत्रादिषु, आत्मीयदुष्कृतसमर्थनाध्यवसायश्च। समभीष्टपरिवादकं पथ्यं खलु प्रायः कटु भवति प्राणिनां परोपन्यस्तम्। तन्न सेवन्ते यावदप्रतिक्रियं दुष्परिणामं प्राप्य विनश्यन्ति।

वैरं हितोपदेशेषु दुर्मन्त्रेष्वानुकूल्यधीः।
क्रियावाचोरदाक्षिण्यं जिह्मता प्रणयिष्विति ॥ १७ ॥

एते खलु विनिपातोदर्कसूचका आत्मविकाराः प्रायो मनुष्याणाम्। अथवा शान्तं पापम्। खलचरितस्यापि बन्धुजनस्यामङ्गलमाशंसितुं नोत्सहे। सर्वथा भीष्मकृपद्रोणादीनां भगवतो व्यासस्य च हितवचनैः कुलवैरस्यास्य नचिरात्प्रशमः प्रसज्जतु। (नेपथ्ये)

मैवं भवतु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विदुरः** — अये, कोऽत्र भोः मदाशंसां निषेधति ?

( नेपथ्ये )

चिन्ता वो वर्तयामः कथं न्विति ।
न वने धार्तराष्ट्रो नश्शासिता सौबलान्वितः ॥ १८ ॥

तदागच्छत, आगच्छत । विपत्संघर्षसमुत्तेजितद्युतेर्विराजमानस्य धर्मसूनोः स्वस्तिवचनोत्फुल्लवदनकमलाः पादमूलमेवोपाश्रयामः ।

**विदुरः** — अहो तु खलु भोः, महानेष सङ्घो महीसुराणां नगरादपव्रजतां सगोवत्सानां सशिष्यस्त्रीबालानाम् । अहो वर्चस्विता ब्राह्मण्यस्य; याऽद्य दूरोदितस्यापि शारदार्कस्य प्रभां नियच्छतीव ।

अधीतच्छन्दसां ज्योतिः प्रभावो ज्ञानभास्वतः ।
तपोऽनुष्ठानजं तेजो हुतस्याग्नेरुतोद्गमः ॥ १९ ॥

धिक् खलु नगरं ब्राह्मणैरपवर्जितम् । धिङ्नाम पुरुषान् ब्राह्मणैरवगीतान् । धिगपि च राजानं ब्राह्मणैराक्रुष्टम् । अयमहमेतान्पुरस्कुर्वाण एव धर्मनन्दनं द्रक्ष्यामि ।

( इति निष्क्रान्तः )

॥ शुद्धविष्कम्भः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( ततः प्रविशत्याश्रमद्वारमध्यासीनो युधिष्ठिरः । )

युधिष्ठिरः — (सचिन्ताविषादम् )

द्यूतं नार्हति सेवनं व्यसनिनः कामं न चामी वयं
दर्पाह्वानमभूत्तथा नृपसभे मानार्थमङ्गीकृतम् ।
सर्वा निर्विषया ममास्त ममता तस्मिंश्छलोपक्रमे
तिष्ठाम्येष च धर्मपाशनियतः को वेद दैवीं गतिम् ॥

अपि च ;

नार्जितं व्यवसायेन न भुक्तं भोगतृष्णया ।
न त्यक्तं परितापेन स एवास्मि युधिष्ठिरः ॥ २ ॥

अथवा, ज्वरवेगामिवैश्वर्योष्माणं, मालिन्यानुषङ्गमिव विषयवासनानुलेपम्, उन्मत्तककोलाहलमिव कामक्रोधविकारविकटं परिस्पन्दं भावयतः परिजिहीर्षतश्च मे वन्यवृत्तिमुपकल्पयता सदृशमेव न किं विदधे विधिना । यत्सत्यं, चिरपरिचित इव मे श्लिष्यत्यन्तरात्मन्येष वनवास एव। अहो सौभाग्यमस्य ;

एतान्याश्रममण्डलानि महतां क्रोडेषु शाखाभृता-
मस्पृष्टानृतमर्थलोभविरतव्यापारमतोष्यते ।
संसर्गेण विपश्चितामिह तपोऽनुष्ठानपूतात्मनां
शान्तिप्रेमसुवो मुदः परिणमन्त्याभ्यन्तराः काश्चन ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( प्रविश्य )

**इन्द्रसेनः** — राजन्, आर्यविदुरं पुरस्कृत्य हस्तिनापुरवासिनो महाब्राह्मणास्सङ्घशस्त्वामुपतिष्ठन्ते ।

**युधिष्ठिरः** — ( ससंभ्रमम् ) अर्घ्यमर्घ्यम् । ( इत्युत्थाय प्रत्युद्गच्छति )

**इन्द्रसेनः** — तद्भट्टिन्या आनाययामि । ( इति निष्क्रान्तः )

**युधिष्ठिरः** — किं मां प्रत्यनुनेष्यन्ति ?

( ततः प्रविशति विदुरो ब्राह्मणसङ्घश्च )

**युधिष्ठिरः** — अथवा दुःखितवर्णास्सर्वे एते लक्ष्यन्ते ।
( उपसृत्य ) स्वागतमार्यस्य । नमो भगवद्भ्यः ।

( प्रविश्य )

**द्रौपदी** — आर्यपुत्र, इदमर्घ्यमिदं पाद्यम् । नमो भगवद्भ्यः ।

**भरद्वाजः** — ( सास्रम् ) राजन्, विजयश्रिया युज्यस्व । याज्ञसेनि, नित्यमाश्रितपालनी श्रीमती भूयाः ।

**द्रौपदी** — ( स्वगतम् ) संप्रत्यात्मभरणेऽप्यशक्ता खल्वस्मि । कुतः एतावान्मे विभवो भविष्यति ।

**युधिष्ठिरः** — अहो मे सौभाग्यम् । वनस्थमप्यनुजिघृक्षवः पावनदर्शना भवन्तो मामनुप्राप्ताः । इदमर्घ्यं, इदं पाद्यम् । किं न प्रतीच्छत । वनस्पतेरस्य च्छायायामेव निषीदन्तु भवन्तः । अन्तःकरणैकरसिकानां भवद्विधानामवस्थानुगुण एवोपचारो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हृदयंगमो भवितुमर्हति । अद्यैव खलु कृपणोऽस्मि । यन्मन्द-विभवतया भवतामनुरूपामभ्यर्हणामुपकल्पयितुमसमर्थो भवामि । (सशोकम्) कथमश्रुक्लिन्नमुखास्सर्वे न किञ्चित्प्रतिपद्यन्ते । आर्य, भवानपि किमेवम् । अलं शोकेन ।

**द्रौपदी**—(स्वगतम्) किं दारुणतरं कमपि कुरुपतेर्नवमुपक्रम-मुपन्यासिष्यन्ति !

**विदुरः**— युधिष्ठिर, अपत्रपते मे वाणी तथाविधेऽप्यवसरे परिस्पन्दमन्थरा भूत्वा अद्य त्वत्पुरो बहिरुल्लसितुम् । अपि च;

मुक्तवेणीमिमां साध्वीं रुदितोच्छूनलोचनाम् ।
पश्यन्कथं न शोचामि निःश्वासग्लपिताधराम् ॥ ४ ॥

धिग्गाङ्गेयं धिक्कृपद्रोणमुख्यान्
धिग्गान्धारीजानिमेतान्धिगस्मान् ।
सभ्यस्थाने पातकस्यांशभाग्भि-
र्यैरुत्तानं वीक्षमाणैर्निषण्णम् ॥ ५ ॥

[इति शोकावेगं नाटयति]

**प्रथमो ब्राह्मणः**— हा महाराज, हा सत्यव्रत, हा राजसूय-याजिन्, ईदृशीमवस्थां लम्भितोऽसि सभ्रातृदारो दायाद-पातकिभिः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुकुटोपरचितमुकुलैरञ्जलिभिरुपासितो नृपालैस्त्वम् ।
कथमद्य वनचराणामद्भुतलक्ष्यो वने रमसे ॥ ६ ॥

द्वितीयो ब्राह्मणः —

धिग्धार्तराष्ट्रमविधेयमनार्यबुद्धिं
धिक्सौबलं प्रबलपापमतिं जघन्यम् ।
दुश्शासनं धिगयशस्करकृत्यधीरं
धिक्कर्णमन्यपरिवादनिगूढगर्वम् ॥ ७ ॥

एषोऽस्माकं समासः ।

न तु भूयः प्रवेक्ष्यामः कौरवाभिवृतां पुरीम् ।
युष्मान्विवासयद्भिः किं न सन्तोऽप्यपहास्तिताः ॥ ८ ॥

तृतीयो ब्राह्मणः —

धर्मसूनो महाप्राज्ञ नयानयकोविद ।
यत्र त्वमसि वत्स्यामस्ततोऽन्यत्र निराश्रयाः ॥ ९ ॥

युधिष्ठिरः — अस्तु वा मा वाऽस्मासु दारुणोपक्रमो धृतराष्ट्रजः । निन्दित एव ध्रुवं स राजा भवन् भूसुराणामेवमनाश्रयः । (स्वगतम्) अयि भोः दुर्योधन, अद्यैव खल्ववगच्छामि नृशंसं त्वया मय्याचरितम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मामास्पदाद्भ्रंशयता त्वया हि न केवलं काननवासदैन्यम् ।
कार्पण्यमेतत्प्रथमं प्रदिष्टं भिक्षार्थिनो ग्राहयितुं नजर्थम् ॥

**द्रौपदी** — (स्वगतम्) अनर्घमिदमुपस्थितमातिथ्यचरणसौभाग्यं मे हतविधिर्विसंवदति ।

**विदुरः** —(स्वगतम्) नूनं धर्मसङ्कटे निक्षिप्तस्सीदति धर्मवत्सलः ।

**द्वितीयो ब्राह्मणः** — राजन्, मा च ते भूत् चिन्ता कथमहमवस्थान्तरं गतो महान्तं विप्रसङ्घं बिभृयामिति ।

स्वयमाहृत्य वन्यानि भुञ्जानास्त्वामुपास्महे ।
अनुध्यानेन जप्येन भावयन्तश्शिवं तव ॥ ११ ॥

**भरद्वाजः** — राजन् साधुहृदयानन्दन, धर्मनन्दन, बाढमेवमेव नस्सर्वेषां परिनिष्पन्नोऽध्यवसायः । तदलमसमाधानदुर्ललितेन ।

**युधिष्ठिरः**- अहह दुष्करमभिहितम्, कामं सत्सङ्गो मां पवित्रयिष्यति । न तु खलु शक्यं स्वयमाहृत्य भोजिनो युष्मान्निरुपकारवन्ध्यस्य मे प्रेक्षितुम् । कथं ह्यस्मद्विधो गृहाश्रमे वर्तमानो जनः पालने भरणे चाप्याश्रितानुदास्ते । हन्त भोः,

होतृणां यज्वनां नित्यमग्निज्वलिततेजसाम् ।
अत्तुं मे भुक्तशेषं वो नान्वमंस्त सुयोधनः ॥ १२ ॥

(नेपथ्ये)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुमनुतां मा वा स कुरुकुलपांसनः । वयमनुमन्यामहे । शृणु भोः धर्मप्रिय, धर्मनन्दन, शृणु

अन्नानां स्मृतिसुलभां समृद्धिमेनां
पाञ्चाल्याः प्रतिदिवसं प्रसादयित्रीम् ।
कल्पादौ प्रथमनिसृष्टपङ्कसाना-
मंशूनां मम विकृतिं गृहाण पात्रीम् ॥ १३ ॥

( सहसा आविर्भूय )

**अरुणपुरुषः**— अयं ते भगवतः पूष्णः प्रसादः ।

( इति स्थालीं दत्वा अन्तर्हितः । )

**युधिष्ठिरः**— अहो ब्राह्मणानां महिमपारम्यम् । यदव्याजमंशुमाली मामनुकम्पते ।

**ब्राह्मणाः**— अहो शुद्धसत्वता राजर्षेः, यं यदृच्छादृष्टपरितापमननुगृह्य वर्त्मनि पुरः प्रक्रमितुं नासहिष्ट गगनमहापथनित्यपान्थो भगवानहस्करोऽपि ।

**विदुरः**— अविगीताभिनिवेशव्यसनिनं त्वां स्थाने खल्वभिवर्धयन्ति देवाः ।

**युधिष्ठिरः**— ( सभक्त्युन्मेषं )

त्रयीमयाय देवाय मध्ये नारायणात्मने ।
सवित्रे ग्रहनाथाय महसां निधये नमः ॥ १४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तापच्छिदे प्रणमतां तपनाय तेजो-
धाम्ने द्विषट्तनुविभाजितकालभूम्ने ।
ताराग्रहाधिपतये किरणैरवाप्त-
लोकत्रयाय भवते भगवन्नमोऽस्तु ॥ १५ ॥

सर्वथा कृतार्थोऽयं जनः । पाञ्चालि, आदत्स्व भगवतोऽम्बरमणेरनुकम्पामिव घनीभूतां मनोरथानुविधात्रीमेनां पात्रीम् ।

द्रौपदी— अनुगृहीताऽस्मि । (इति गृहीत्वा स्वगतम्) एवंविधैर्दैवानुकम्पापिशुनैरभ्युदयैः कामं क्षुद्रारातिविहितो निकाराग्निसन्तापोऽपि शक्यः निर्वापयितुम् ।

(नेपथ्ये)

भोः पाण्डुकुलप्रदीप, राजर्षे, सुखाय ते भवतु मध्यमा सन्ध्या । अद्य हि,

व्यामृष्टवारिधरबाष्पभरासु दिक्षु
निर्मन्थरप्रसृतभानुरयं समिन्धे ।
पूषा प्रभावविनिवर्तितलोकदृष्टि-
र्मध्येनभस्त्वमिव भावितधर्ममर्मा ॥ १६ ॥

अपि च,

उन्नमितताम्रमण्डलरविभृङ्गारा पुरस्सरोजानाम् ।
भिक्षाप्रदेव राज्ञी विराजते शारदी नभोलक्ष्मीः ॥ १७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**युधिष्ठिरः** — अहो, प्रेमपेशलत्वान्मयि महर्षय एव मे वैतालिक-नियोगमशून्यं कुर्वन्ति ।

**ब्राह्मणाः** — सुष्ठु, स्थाने खल्वधिकारः ।

**द्रौपदी** — आर्यपुत्र, इत्थं च हस्तगतोपायाऽहं तावदतिथीना-माराधनयोग्यं पाकसंविधानं संम्पादयामि । तदनुजानीहि मामभ्यन्तरगमनाय ।

**युधिष्ठिरः** — सुष्ठु गृहिणीपदे जागर्ति भवती । एवं भवतु । (निष्क्रान्ता द्रौपदी) इन्द्रसेन,

(प्रविश्य)

**इन्द्रसेनः** — देव, अयमस्मि ।

**युधिष्ठिरः** — किमसि वक्तुकाम इव ?

**इन्द्रसेनः** — देव महाराजधृतराष्ट्रप्रेरितः सञ्जयः आर्यं विदुरं परिपृच्छन्माद्रीसुताभ्यां तिष्ठति ।

**युधिष्ठिरः** — भवतु, संभावयिष्यामि । अथ भगवतस्सूर्यस्यानु-कम्पाविशेषमावेद्य फलमूलान्वेषिणौ खननावचयकर्मव्यग्रौ भीमा-र्जुनौ सद्यो गत्वा निवर्तय ।

**इन्द्रसेनः** — तथा (इति निष्क्रान्तः)

**युधिष्ठिरः** — (स्वगतम्) कुतः खलु सञ्जयं प्रेषयति धृतराष्ट्रः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विदुरः— (स्वगतम्) कथं मां समाधित्सते धृतराष्ट्रः? कष्टं बहुमानसङ्कटे निपतितोऽस्मि। कुतः प्रत्याख्यानं नाम तादृशस्य आबाल्यादास्मद्दायिनः प्रभवतश्शासनाक्षराणाम् । अनया प्रणाल्या अन्यदिदमनिष्टमत्रापत्स्यते । न खल्वियतीमपि वृद्धिं पाण्डुनन्दनानामस्मत्तोऽधिगम्य विषहिष्यन्ते सौबलादयः। अथवा कृतं शङ्कया । असहमानानामात्मानमीर्ष्या प्रदहतु। किमन्यत्प्रतिपत्तुं पारयिष्यन्ति? (प्रकाशम्) राजन्, भवतोऽप्यनुष्ठानवेला अतिवर्तते ।

युधिष्ठिरः— बाढममी प्रचलिष्यामः । अयि भोः, पूज्यपादा ब्रह्मनिष्ठाः, एवं वो युधिष्ठिरश्शिरसा प्रणम्य विज्ञापयति।

अनुमतमिह वस्तुं वस्तु साक्षात्सवित्रा
प्रहितमपि हितं तत्पात्रमक्षय्यभैक्षम् ।
अथ च परिकरं मे युष्मदाराधनार्थं
सफलयितुमनूनं संप्रसीदन्तु सन्तः ॥ १८ ॥

भरद्वाजः— पाण्डुनन्दन, किमिदमुच्यते । महोत्सवः खल्वस्माकम् ।

युधिष्ठिरः— आर्य, भवान् सञ्जयश्च कियन्तं कालमातिथ्यग्रहणेनास्मान् कृतार्थीकरिष्यतः ।

विदुरः— परं नः प्रियम् । (इति निष्क्रान्तास्सर्वे ।)

इति प्रथमोऽङ्कः ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ द्वितीयोऽङ्कः ॥



( ततः प्रविशति सुदर्शनः । )

**सुदर्शनः—** ( नभोऽवलोक्य ) अये, कथमवसानोन्मुखा शर्वरी! इदं मानुष्यकधर्मतादवस्थ्यं नाम प्रकृतिरूपस्यापि जगतः । तथा हि--

शान्तोलूकरुतासु दिक्षु विहगैर्व्याकीर्णमुत्कूजितं
कोकानामयमुत्सवः पुनरयं शोकश्चकोरावलेः ।
लक्ष्मीः कैरवकञ्जयोः कलयते संभावनानुक्रमं
भानावभ्युदयोन्मुखे च्युतिमसाविन्दुः पुरो विन्दति ॥

( परिक्रम्य दृष्ट्वा ) अयं नः पूर्वगोष्ठीसत्रह्मचारी मठिकालिन्दे स्वपिति । भोः ताड्यायन प्रबुध्यस्व, प्रबुध्यस्व । कथं शिष्टाभिजनस्त्वं प्रत्युषसि स्वप्नेऽभिरमसे ।

( प्रविश्य )

**ताड्यायनः—** अये सुदर्शनमिश्रः !

**सुदर्शनः—** कुतो मां मिश्रयसि । केवलः खलु सुदर्शनोऽहम् । अथवा भवानपि ताड्यायनमिश्रो भवतु ।

**ताड्यायनः—** नहि नहि । श्रीमत्याः श्रुत्याः प्रसादनार्थं भगवतो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वैपायनस्यान्तेवसन्तं भवन्तं, नित्यं खुरुखुरायमाणहस्तस्य शाण्डिल्योपाध्यायस्य ताड्यायमानस्ताड्यायनोऽहं कथमार्यवाचा न संभावयामि ! न खल्वद्यापि भवान् ताड्यायनसब्रह्मचारी ।

सुदर्शनः — अपेहि, अपेहि । शापितोऽस्यावयोरेकशय्यापरिवर्तनप्रमाणितेन वयस्यभावेन, यद्येवं पुनर्मिथ्योपचारकदर्थनामनुरुध्यसे ।

ताड्यायनः — भवतु तावत् । मित्रमणे, चिरात् खलु प्रेक्षे त्वाम् । तत्कीदृशोऽवसरः ? अथवा कति दिवसास्त्वत्सूक्तिसुधासेकोत्फुल्लकर्णयुगलस्य मम । अयि सहृदयावतंस, वर्णयाद्य प्रभातसमयम् ।

सुदर्शनः — न खल्वाशुकविरहम् । तद्यावदनुरूपं काव्यार्थं चिन्तयामि तावत्तरणिगर्भतया पाण्डुरावकाशप्राचीमूलमनोहरं त्वमेवौषस्यमेनं मुहूर्तं वर्णय ।

ताड्यायनः — बाढम् । क्षुद्रप्रभावानां खल्वहीनाः परिकरा भवन्ति । भवत्वेवं तावत् ।

आगस्त्यः करमुकुलः किमर्कबिम्बः
प्रत्यक्षं पिबति तमोमहोदधिं यः ।

(विचिन्त्य) उत्तरार्धे दुःसन्धानं भवति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सुदर्शनः** — कथं दुःसन्धानं संपद्यते ?

**ताड्यायनः** — समुद्रं पीत्वा स मुनिः परिशेषितं रत्नजातं न खल्वपजहार । एष तु रविः तमः पीत्वा तारकौघं द्रागपहरति । कथमत्र संविधेयम् ?

**सुदर्शनः** — पश्य सखे, कोऽत्र क्लेशस्संविधाने ।

व्याकीर्णं यदि पुनरेष रत्नजातं
तारारूयं हरति विवक्षितं न तन्नः ॥ २ ॥

**ताड्यायनः** — (विहस्य) सखे, यत्सत्यं सुदर्शन एव भवसि । अथ विश्राम्यत्वेतन्मत्प्रलपितश्रवणकौतुकं नाम । वर्णयतु भवान् सुमधुरं शर्वरीविरामम् ।

**सुदर्शनः** — अनुल्लङ्घनीयस्सुहृदादेशः । तथाहि —

पाण्डुच्छाये प्रतिहतमहस्यैन्द्रदिक्तारकौघे
भानोर्बिम्बं तिरयति पुरः संभृते बाष्पबन्धे ।
वासोऽब्जिन्याः परिनिपतता मारुतेनापजह्रे
भृङ्गैर्ध्यातं ललितमधुरां भोक्तुमेनामनार्यैः ॥

अपि च सखे पश्यात्र ।

रविकरविनिर्धूता तारावली गगनाङ्गणे
ढलितमहसः पत्युः पाश्चात्यदिक्तटलम्बिनः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिसरमुपावृत्ता पुञ्जीभवन्त्यपि दुर्गता
प्रमुषितरुचिः क्षीणक्षीणा प्रयाति परोक्षताम् ॥

ताड्यायनः— अहो कथं चित्तविद्रावणं रसान्तरमत्र संमिश्रयति भवान् । हा धिक्, ईदृशीमेव खलु याज्ञसेनीमद्य पुरःस्थितामिव पश्यामि । सखे सुदर्शन, सौजन्यशेवधिस्साधुजनोऽप्येवमायास्यते विधिहतकेनेत्यास्मिन्मर्मोपघाते कथं पश्यसि ?

सुदर्शनः— सखे ताड्यायन, कृतमत्र विध्युपालम्भेन । पश्य;

यत्कृच्छ्रेषु गुणा भवन्ति विदिता लोकैरविश्वासिभि-
स्तानुद्भासयितुं विधिर्गुणवतां विस्तारयत्यापदः ।
ते चामी गुणिनो विमर्दममितश्रेयस्करं मन्वते
यत्तेषामितरन्न जीवितफलं धर्मस्य संरक्षणात् ॥

(आकाशे) हा अजातशत्रो, गुणेष्वेव खलु ते दृढं विश्वासिभिरेवं दौर्गत्यान्धकूपे समवरोपितोऽसि ।

आकारितो नहि दुरोदरमाक्षिपेस्त्वं
निर्वासितोऽपि समयं न कदापि भिन्द्याः ।
इत्थं विदन्ति रिपवस्तव धर्मसूनो
लोकोत्तरः खलु गुणो बहुदुःखमूलम् ॥ ६ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( नेपथ्ये )

ताड्यायन, ताड्यायन,

**ताड्यायनः** — हा धिक्, हा धिक्, उपाध्यायो मामाह्वयति । सुहृत्समागमप्रमोदनिर्भरेण मनसा स्वनियोगो विस्मृतः । तत्सखे, गन्तास्मि । कथय, कथय तावत्; कुतस्त्वम् ? अद्य कीदृशो वा नियोग इति ।

**सुदर्शनः** — आदिष्टोऽस्मि भगवता द्वैपायनेन; यथा — अयि सुदर्शन, सद्यो गत्वा विदुरावसथनिवासिन्याः कुन्तीदेव्याः मत्समाश्वासनमावेद्य –

( नेपथ्ये )

ताड्यायन, ताड्यायन, दुष्टवटो क्वासि ।

**ताड्यायनः** — (उच्चैः) अयमहमागतोऽस्मि । सखे सुदर्शन, ब्रूहि, ब्रूहि, कुत्रावयोः पुनर्दर्शनं भविष्यति ।

**सुदर्शनः** — नन्वत्रैव । ममापि प्रत्युपस्थितं प्रथमोपाध्यायवन्दनं न लङ्घनीयम् । एष स्वयमेव प्राप्त उपाध्यायः । तत्समाहितो भव ।

**ताडयायनः** — सन्निहितोत्पातप्रशमनं त्वमेवाद्य मे मङ्गलोपस्थानं भवितुमर्हसि ।

(ततः प्रविशति क्रुद्धः उपाध्यायः)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शाण्डिल्यः** — अरे, रे, गुरुनिदेशावमानिन्, उपस्थिते करणीये जानासि तिरोधातुमात्मानम् । किं नादिष्टोऽसि मया प्रत्युषसि काम्यकवनं प्रस्थास्यमानानामस्माकं शकटसंभाराधिरोपणे सन्निहितेन त्वया भवितव्यमिति ।

**ताड्यायनः**— मर्षयतु मामाचार्यो मर्षयतु । अद्य खलु —

**सुदर्शनः** — (उपसृत्य) उपाध्याय, सुदर्शन एषोऽभिवादयते ।

**शाण्डिल्यः**— अये, कथमस्मच्छिष्यस्सुदर्शनः ।

**सुदर्शनः**— अथ किम् । भवतां शिष्यकोटिप्रवेशेनात्मानं धन्यंमन्यस्स एवाहम् ।

**शाण्डिल्यः**— अप्यनामयं ते? अपि निरुपघातं प्रचरसि श्रुत्यध्वनि? अथवा, अनवसर इत्येव मन्ये । कौरवाणामेतादृशेन दौर्जन्येन प्रक्षिप्तचिन्ताशल्यव्याकुलात्मानमेव भगवन्तमवगच्छामि ।

**सुदर्शनः**— अस्त्येतत् । संप्रति खलु भगवतः आश्रमोद्देशे सन्निधानमपि विरलविरलमापतितम् । तथाहि—

अद्यानुशोचति सुतानुपगम्य पाण्डो-
रद्यानुनेतुमुपसर्पति धार्तराष्ट्रान् ।
जागर्ति योगविधया दुरुपक्रमाणां
शश्वच्च कौरवभुवां प्रतिकारहेतोः ॥ ७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शाण्डिल्यः**— अथाद्य कुत्र स भगवान् पाराशर्यः ।

**सुदर्शनः**— अनुनयदुरासदेषु धार्तराष्ट्रेषु, अन्ततो युद्धमपरिहार्यं मन्वानः पाण्डवपक्षशिवानुध्यानपरो भगवान्, लोकपालानामस्त्रसमुदायं, पाशुपतं च भवानीपतेरमोघमस्त्रमर्जुनं प्रापयिष्यन् साधनकलापमुपदिश्य तपसे सद्यस्तं प्रेषयितुं धृतव्यवसायः पाण्डवाश्रमं प्रति गतः ।

**शाण्डिल्यः** — तत्सुविहितं त्वया पुनर्नगरं निवर्तमानेन । गुरुभिरपि स्वयमाशंसनीयशिष्यभावः खलु त्वं मेधावी । शास्त्रग्रहणसामर्थ्यधर्मेण पञ्च पर्यायाः शिष्यत्वेन प्राप्ताः कीर्त्यन्ते । तेषु त्वं प्रथमपर्याये । अयं च वञ्चनापण्डितः पश्चिमे पर्याये । तथा हि —

ते केचिद्धिषणोपमाः श्रुतधरास्तेऽन्ये सकृद्दर्शना-
दर्थानाकलयन्ति सूक्ष्ममतयस्संस्कारलग्नानिव ।
अन्येऽधीत्य मुहुर्विदन्ति लिखितं गृह्णन्ति केचिच्छनै-
र्वाणीं दर्दुरवत्परे तु रटनैरुच्चाटयन्त्यञ्जसा ॥ ८ ॥

( इति ताण्ड्यायनं सावज्ञमवलोकयति )

**ताण्ड्यायनः** — ( स्वगतम् ) अवितथमेतद्गुरुपुत्रे भाण्डायन एव; यस्य निरन्तरेष्वध्ययनभ्रंशेषु पुत्रवत्सलतया ताडनानां भागिनं मां करोत्याचार्यः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शाण्डिल्यः** — तेन हि, सुदर्शन अद्य विकर्तनानुग्रहलब्धाक्षयपात्रमहिम्ना समाराधितासंख्यभिक्षाभुजो धर्मपुत्रस्य पार्श्वमेव सकुटुंबं प्रस्थितानस्माननुप्रस्थास्यसे किल । एष ताड्यायनोऽपि तथैव ।

**सुदर्शनः** — उपाध्याय, भगवदादेशेनैव प्राप्तोऽहं नगरीम् । तत्रभवतीं कुन्तीदेवीं दृष्ट्वा तदनु काम्यके सहदेवानुवर्ती भविष्यामि । अद्य सहदेवमनुस्मृत्यैव नितरां परितप्यते भगवान् – सुकुमारतरः कथं स काननत्रासदुःखेन म्लायत इति ।

**शाण्डिल्यः** — उपपन्नमिदम् । जानामि च युवयोराशैशवादुपचितं मिथस्साहित्यगोष्ठीरसास्वादनिरन्तरं वयस्यभावम् । तद्गच्छ पुनर्दर्शनाय । वयमपि प्रतिष्ठामहे, येन प्रास्थानिको वर्गोऽस्मान्प्रतिपालयिष्यति । ताड्यायन, इत इतः ।

**ताड्यायनः** — सखे, सुदर्शन, आपृच्छे किल ।

**सुदर्शनः** — गच्छ पुनर्दर्शनाय ।

( निष्क्रान्तौ शाण्डिल्योपाध्यायताड्यायनौ )

अहो सौभाग्यं युधिष्ठिरस्य । अथवा धर्मव्यवसायिनस्तस्य प्रकृतिभूतं खलु देवभूदेवप्रभवमानुकूल्यमङ्गलम् । (अवलोक्य) हन्त, तालप्रमाणमुदितः किरणमाली । तथाहि,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वैभातिकानिलचलत्सरलद्रुपर्ण-
सङ्घातपाततरलाः किरणप्ररोहाः ।
बालांशुमालिन इमे किमपि प्रसक्त-
माञ्जिष्ठशोभनरुचोऽभिनयन्ति नृत्तम् ॥ ९ ॥

तदविलम्बेन कुन्तीदेवीं द्रष्टुमुचितं मे । (इति निष्क्रान्तः ।)

॥ विष्कम्भः ॥

(ततः प्रविशति कञ्चुकी)

**कञ्चुकी** -- अहह, भोः युगपरिवृत्तिरिव महानेष राजतन्त्र-प्रलयोऽस्माभिश्चिरजीविततया प्रत्यक्षितः ।

स्मराम्यहं शन्तनुमिन्द्रतुल्यं भोगे प्रयोगे कुशलोत्तरे वा ।
विचित्रवीर्यस्य च राज्यभारं पश्यामि चाप्यन्धकराज्यमेतत् ॥

एतादृशे ह्यरमणीये धर्मप्रक्षोभसमये निर्विष्टशोभनदिवसानां सेवितोदारपुरुषाणां नः स्वनियोगानुवर्तनं नाम चिरपरिचिताचार-मपि जुगुप्सनीयमिव भवति । धिक्कष्टम् ।

बुधनहुषययातिप्रष्ठक्लृप्तप्रकाशे
पुरुभरतकुलेऽस्मिन्राजभिः कीर्तिमान्या ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Sarayu Trust and eGangotri Gyaan Kosha

बहुषु विनयवद्भिः पालिता सङ्कटेषु
क्षणपरिचयदुष्टेवाद्य निर्वासितासीत् ॥ २ ॥

अहह, कुरुकुलस्यास्य दुर्विपाकाय विषमं विषबीजमुप्तमनया कितवाचारव्यसनितया राज्ञः । एषु च दिवसेषु कथञ्चिद्बहुलीभूते धर्मसूनोरक्षयपात्राधिगमवृत्तान्ते वनप्रवासश्लाघिनां गरिष्ठजनानां पर्यभिष्यन्देन लघूक्रियत इव राजधानी । अथ चाद्यैव प्रतिनिवृत्तयोर्विदुरसञ्जययोर्वचनैरवगतार्थाः केऽपि राजकुलाभ्यन्तरजनाः भीमार्जुनयोः भाविनं कमपि महिमोत्कर्षं सूचयन्ति । एवं गतेऽपि च महाराजः कुलवृद्धजनस्य हितवचनेष्वनादरं प्रकटय्य सौबलाङ्गराजावेव प्रमाणयति मन्त्रेषु ।

( नेपथ्ये कलकलारवः )

( दृष्ट्वा ) अये जनसंमर्दक्षोभो राजवीथ्याम् । ( परिक्रम्य पश्यति । )

( नेपथ्ये )

द्यूती खलः कुलवधूपरिभावनश्च
राज्ञो यदि प्रियतमोऽखिलकार्यधुर्यः ।
वित्ताधिकाश्शमरताः कुलमानिनश्च
कं नाम यान्तु शरणं भुवि पौरवर्गाः ॥ ३ ॥

कञ्चुकी— एतत् प्रधानश्रेष्ठ्यधिष्ठितं वैश्ययूथं नैराश्यादुपक्रोशति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजानम् । अवश्यं खलु सान्त्वयितव्याः प्रजाः राज्यमङ्गलाशंसिना नयकोविदेन प्रजापालेन ।

यद्यार्यवृत्त्या न समीक्रियन्ते प्रजासु दोषा उपतापमूलाः ।
न राज्यभारं सरलं निवोढुं शक्यं रथं दुर्निमितेषु यद्वत् ॥ ४॥

( इति विकटं परिक्रामति )

( प्रविश्य )

**प्रतीहारकः**—आर्य वंशीधर, महाराजधृतराष्ट्रो मां समाज्ञापयति 'गच्छ शीघ्रं; पौरमण्डलक्षोभं प्रशमयितुं सञ्जयमाज्ञापय' इति । तद्यावदहं सञ्जयं प्रबोधयामि तावद्भवान्मन्त्रशालां प्रविविक्षोर्महाराजसुयोधनस्य प्रतिहारभूमिमशून्यं करोतु ।

**कञ्चुकी** — बाढम् । वातायन, सञ्जयश्चैवं पौरान् प्रत्याययतु । यथा वैरिनिरसनोद्योगे कामं कुटिलमन्त्रा अपि राजानस्सर्वथा प्रजासु वत्सलाः नीतिपराश्चेति । न स न जानाति । तथापि न ज्ञापयितुमसांप्रतम् ।

**प्रतीहारकः** -- आर्य तथा । ( इति निष्क्रान्तः )

**कञ्चुकी** -- ( परिक्रामन् ) अथवा कुतः प्रकृतयः केवलैराक्षिप्रमार्जनोपायैर्वञ्च्यन्ते । यावत्पाण्डवेषु राजा न सुजनीभवति तावत्पौराः न प्रियशतैरपि रञ्जयितुं शक्यन्ते । तथा च पाण्डवप्रवासमारभ्य अद्य यावत् –

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सङ्घीभूताः खलु तत इतो ब्रह्मविट्शूद्रमुख्या
दोषान्स्मृत्वा कुरुकुलभुवां गर्हयन्तश्शपन्तः ।
आशासानाः कुशलममितं पाण्डवानां नदन्त-
श्शोचन्तश्च प्रशमविमुखा बह्वमी मन्त्रयन्ते ॥ ५ ॥

भवतु, मन्त्रशालाप्रतीहारं तावदशून्यं करोमि । (परिक्रम्य दृष्ट्वा) हन्त भोः, एष पितामहभीष्मो महाराजप्रतीक्षया प्रागेव मन्त्रशालामधितिष्ठति । धिक् परिजनस्य प्रमादम् । कुत्र नु खलु महाराजं प्रेक्षे । (सत्वरं परिक्रामन्) किन्नु खलु पितामहः प्रधूमित इवाग्निशैलकूटस्सुसंरब्धमुखवर्णो दृश्यते । तत्किमिदानीं भविष्यति । (पुरो निरूप्य) कुब्जक, कुब्जक, इत इतः ।

(प्रविश्य)

**कुब्जकः** — आर्य अयमस्मि ?

**कञ्चुकी** — कुब्जक, कुत्र नु खलु महाराजः ।

**कुब्जकः** — आर्य, महाराजः कर्णसौबलाभ्यां द्यूतसभायां मन्त्रयमाणस्तिष्ठति ।

**कञ्चुकी** — अयि, मन्त्रशालायां राजानं प्रतिपालयति पितामहः । तद्गत्वा ब्रूहि पितामहम् । एष वंशीधरो महाराजं शीघ्र-माह्वयतीति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुब्जकः — एवं न्विदम् ! अहो प्रमादः परिजनानाम् ।

( इति त्वरितं निष्क्रान्तः )

कञ्चुकी — किमद्यापि कर्णसौबलाभ्यामेव मन्त्रयते महाराजः । धिगस्य व्यामोहम् । ( परिक्रम्य ) एष यथानिर्दिष्टो महाराजः । नूनं न जानात्युपस्थितं पितामहम् । यावदुपसर्पामि । किं साशङ्कपातेनाक्षिकोणेनासकृत द्वारोपान्तमवलोकते । अनिष्टाख्यानमुत्प्रेक्षमाणस्येवास्य कातरं दर्शनम् । किमनवसरो भवेत् प्रतीहारस्य । हा धिक्, कष्टं खलु प्रभुसेवापारतन्त्र्यं नाम । तथाहि —

गच्छन्नतर्कितमुपेत इवाकुलोऽस्मि
तिष्ठन्विलम्बनमसांप्रतमित्यवैमि ।
गृह्णन्गिरं प्रतिशिरश्चलनान्यपश्यन्
सञ्जातमन्तुरिव कातरतामुपैमि ॥ ६ ॥

यद्वा तद्वा भवतु । पितामहागमनमुद्दिश्य सर्वोऽप्यवसर एव प्रतीहारस्य (इत्युपसर्पति)

( ततः प्रविशति यथानिर्दिष्टः कर्णसौबलाभ्यां सुयोधनः )

दुर्योधनः — मातुल, कष्टा हि नाम कुलवृद्धानामाशयाभ्यर्हणव्यसनिता कार्यविनिर्णयेषु ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्त्रयन्ते विरुद्धानि पुरस्कुर्वन्ति दुर्ग्रहम् ।
विनयावस्थितिस्तेषु रक्षितव्या तथाऽपि नः ॥ ७ ॥

कर्णः — एवमेतत् ।

उत्पतिष्णोश्शिरोभारः पादबन्धः प्रधावतः ।
शल्यमुत्सहमानस्य दुःखयन्ति वयोधिकाः ॥ ८ ॥

शकुनिः — तेन ह्यत्रैव मुहूर्तमक्षक्रीडाविनोदं रोचयतु भवान् ।

दुर्योधनः — बाढम् ।

कर्णः — उदारः कल्पः ।

शकुनिः — (अक्षान् क्षिपन्) राजन्, मिथ्या खलु विनिन्दन्ति मनुष्यपाशाः पाशकान् । श्रूयतामस्मत्परिघोषणा ।

रिपुविनयनदक्षः क्ष्माभृतां मित्रपक्षः
प्रणयगुणगवाक्षः श्रीगृहद्वारपक्षः ।
निजपरनिरपेक्षो निर्भरायासमोक्षो
जयति विहितशिक्षक्षेमदीक्षाक्षमोऽक्षः ॥ ९ ॥

कर्णः — राजन्, एवमेतत् । परा काष्ठा ह्येषा कला क्षत्रियाणाम् ।
यतः,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सीमन्तिनीनां करणप्रभेदान् सुहृज्जनानामुपदायकानि ।
सर्वस्वमेव प्रसभं रिपूणां पणीकृतान्यक्षविदो हरन्ति ॥

कञ्चुकी — (उपसृत्य) जयतु महाराजः । अद्य खलु मन्त्र-शालायां —

दुर्योधनः — वंशीधर, कोऽयं कोलाहलो नगरवीथीषु ।

कञ्चुकी — महाराज, यत्किञ्चिदेतत् । पाण्डवानां दशापरिवृत्तिं काश्चिदनुकम्पन्ते प्रकृतयः । सञ्जयश्चाद्य महाराजवचनेन प्रजा-सान्त्वने व्याप्रियते ।

शकुनिः — कुतोऽद्य सञ्जयः ।

कञ्चुकी — स खल्वद्य काम्यकाद्विदुरं प्रत्यानीय महाराजमुपा-तिष्ठत । महाराज, कियता किल कालेन मन्त्रसभायां युष्मान् प्रतिपालयन्निव सन्निहितः—

दुर्योधनः — वंशीधर, गच्छ, सञ्जयं ब्रूहि 'अविलम्बेन महाराजस्त्वां दिदृक्षते' इति ।

कञ्चुकी — यदाज्ञापयति महाराजः । एष गच्छामि । एतत् किलाहं विज्ञापयितुकामः, यन्मन्त्रशालामधितिष्ठति प्रागेव —

शकुनिः — वंशीधर, विज्ञप्तेरवसरो भविष्यति ।

कञ्चुकी — अनिवेदयन् महाराजस्यैवापराद्धो भविष्यामीत्यत्र मेऽनुरोधः । एष खलु पितामह —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दुर्योधनः** — वंशीधर, कथं विलम्बसे ।

**कर्णः** — न जानीषे महाराजस्यापराध्यसि सांप्रतं विलम्बमान एवेति ।

**कञ्चुकी** — एष निर्गतोऽस्मि । मर्षयतु जराविक्लबबुद्धिं मां महाराजः । (परिक्रम्य स्वगतम्) अहो, दौर्जन्यं मूर्धाभिषिक्तमद्य राज्यरक्षानियोगे । (दूरतो दृष्ट्वा) कोऽयं परिजनानां संभ्रमः । हा धिक्, एष खलु पितामहस्समवनतशिराश्शून्यहृदयेन त्वरितविसंस्थुलपदं विनिर्गच्छति । किमनुधाव्य प्रसादयामि । कुतो मे स्वातन्त्र्यम् । किं निवेदयामि । अथवा, अवगतहृदयकौटिल्यस्यास्य पुरो न पुनर्मे धर्मानुरोधपेशलतया विज्ञापनादैन्यमङ्गीकरणीयम् । हितवादिनो विपक्षीयन्ते खलु विपत्क्षीणमतीनां दुर्मतीनाम् । (इति निष्क्रान्तः ।)

शैली

**कर्णः** — अहो वृद्धसेवकानां प्रभुशिक्षणसाहसिक्यम् । अस्य खलु प्रगल्भंमन्यस्य मनसि वर्तते—एष सुयोधनश्शैशवे मदंसेनोढः कौमारचेष्टितेषु च मया नियमितस्सद्यः किं नूतनोऽभवदिति । गेहे चिरकालानुवर्तिनो वरिवस्यका नाम बृहन्तोऽनर्था एव । ते खलु सेवमाना अपि प्राभवमुररीकुर्वन्ति । हितमुपदिशन्ति । पूर्वपुरुषाचारान्प्रमाणीकुर्वन्ति । अन्यूना इव कदाचिद्गोष्ठीमप्यासेवन्ते ।

**शकुनिः** — राजन्, यदेष सञ्जयः काम्यकात्प्रत्यावृत्तोऽस्मान्



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वयमुपतिष्ठते तत्प्राप्तमेनं क्रीडाव्यासक्तहृदया इवानादरेण प्रतिगृह्णीमः ।

कर्णः— अयमिदानीं प्राप्त एव ।

दुर्योधनः— मातुल, त्वमेवैनमभिभाषिष्यसे । नात्र मे सज्जति जिह्वा ।

शकुनिः— (अक्षान् क्षिपन्) एहि राजन्नयं मे पणः ।

(प्रविश्य)

सञ्जयः—(स्वगतम्)

अविगीतमनुष्ठाय कर्म दुर्मन्त्रशेवधेः ।
कृतमन्तुरिव त्वस्यन्नस्य गच्छाम्युपान्तिकम् ॥ ११ ॥

(उपसृत्य प्रकाशम्) विजयतां कौरवेश्वरः ।

शकुनिः— कथं सञ्जयः! आस्यतां तावत् । किं विदुरप्रत्यानयनदीक्षा समावृत्ता युष्माकम् ?

सञ्जयः— किं मत्प्रतोदेन धृतराष्ट्रो विदुरमानाययामासेति गृहीतम् । तेन हि मुधा वस्तव हृदयायासः । कथं महाराजस्य वचनमित्यपि न कर्तव्यम् ।

कर्णः— न खलु न कर्तव्यमिति । प्रियतमो महाराजस्य भ्राता निजहृदयादपि सन्निहितो नयकोविदः किल मन्त्रदर्शनेष्वचक्षुषश्चक्षुर्भूतः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — आशंसनीयविवासनस्य पाण्डवपक्षपातिनः प्रयत्नेन प्रत्यानीय परिसान्त्वनं नामास्मिन्नन्धराज्य एव घटते ।

सञ्जयः — अथ भवत एव राजतन्त्रप्रगल्भान् परिपृच्छामि । परपक्षप्रवेशोन्मुखमात्मसंवन्धिनमस्मन्मन्त्रसर्वस्वाभ्यन्तरं जनं कथमुपेक्षितुं युक्तमिति । किन्न श्रुतो रावणेनोपेक्षितो विभीषणश्शत्रुपक्षस्य महानवलम्बो जात इति ।

दुर्योधनः — सुपरिशीलितमेव कृतं दशकन्धरेण । दैवेन पुनर्विसंवदितम् । कस्तावदपरागपरिभ्रष्टाया इव नार्याः गूढशत्रोर्बलादानीय परिसान्त्वनेनानुकूल्यमापादयितुं प्रयतेत ?

कर्णः — अथ विश्राम्यतु निर्वृत्तपरिशीलनं नाम । अद्य काम्यकं गतेन भवता यथादृष्टं पाण्डुपुत्राणां वर्तमानं वर्णयतु भवान् ।

सञ्जयः — तत्र चैष समासः ।

दुर्योधनः — (जनान्तिकम्) को हि नाम विस्तरं शुश्रूषते ।

सञ्जयः — किन्दीरं विददार घोरवपुषं मार्गोत्थितं मारुतिः

दुर्योधनः — (जनान्तिकम्) अहो विभीषिका ।

कर्णः — प्रायेणैतादृशाः प्रवादा अलीका एव भवन्ति ।

शकुनिः — वर्तमानं पृष्टः किं वृत्तं कथयति भवान् ?

सञ्जयः — अनुपूर्वशः कथयामीति प्रवृत्तः । तेन हीदं वर्तमानम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हेमाम्बुजं सुरभिताखिलवायुमार्गं
व्योम्नो विकीर्णममरीरभसव्यतीतात् ।
देवी समेत्य यदकामयतेदृशानि
भूरीणि मारुतिरमूनि ययौ विचेतुम् ॥ १२ ॥

**शकुनिः** — अहो शशविषाणप्रार्थनं वैधेयस्य । कथं भूलोके लभ्यानि सुरभीणि हेमाम्बुजानि ? यानि कुबेरसरस्येव विकसन्तीति श्रूयते ।

**सञ्जयः** — कुबेरनलिनीमेवाभिप्रस्थितः ।

**कर्णः** — अथ कीदृशः पार्थः ?

**सञ्जयः** — पार्थः पाशुपतास्त्रसाधनधिया यातस्तुषाराचलम् ।

**कर्णः**— स्थाने खलु तपस्वी जातः ।

**शकुनिः**— सञ्जय, ब्रूहि तावत्पाण्डवाग्रजम् ।

**सञ्जयः**— अक्षय्येण रविप्रसादफलितेनाराधयन्भूसुरा-
नन्नेनर्षिगणावृतो विजयते धर्मात्मजः काम्यके ।

**शकुनिः**— विजयतामेवमेव सुबहून्द्वादश वत्सरान् ।

**सञ्जयः**— अथ किमन्यद्ब्रवीमि । अथवा गच्छामि किल ।

**कर्णः**— ब्रूहि सञ्जय पाञ्चालीं पञ्चपूरुषपुंश्चलीम् ।
कस्योद्दीपयतेऽमर्षं केनाभिरमतेऽथवा ॥ १४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सञ्जयः— बाढं ब्रवीमि ।

पाञ्चाली परिचर्यया मुनिगणान्सत्याशिषस्सेवते
सर्वापद्विनिवृत्तयेऽभिरमते श्रीकृष्णचिन्तामृते ।
किञ्चोद्दीपयते निजाश्रुसलिलैर्निःश्वासनीरन्ध्रितै-
स्तज्ज्योतिः कुरुवंशदाहविधये क्रोधोद्भवं मारुतेः ॥

यथाऽधिगतः पाण्डवाश्रमवृत्तान्त एष उपन्यस्तः । तदापृच्छे किल ।

शकुनिः— किं कण्टकगुल्मलग्नमिवात्मानमुन्मोचयितुं त्वरते भवान् ।

सञ्जयः— न, न । आदिष्टोऽभवं क्षुभ्यन्तीः प्रकृतीस्सान्त्वयितुं महाराजधृतराष्ट्रेण । अनुष्ठितं नियोगमिच्छाम्यावेदयितुं तस्मै । अन्तरा समाहूतोऽहमिह प्रविष्टः ।

कर्णः— किं सान्त्विताः प्रजाः ?

सञ्जयः — कुतस्सान्त्वनं नाम वाङ्मात्रेण वलवत्सरुजचेतसाम् । तथाऽपि मां दृष्ट्वा पाण्डवानां कुशलमनुयुञ्जानाः प्रजाः किमपि कारुण्योपहितमार्दवाः प्रशेमुः । ताः किल सर्वत्र,

चिन्तयन्ति चकिता दुरुदर्कान् गर्हयन्ति कुरुमन्त्रसदस्यान् ।
बिभ्यति प्रतिनदन्ति रुदन्ति प्रव्रजन्ति नगरात्परिवारैः ॥ १६ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शकुनिः** — प्रजासान्त्वनार्थं नियुक्तेन भवता केवलं पाण्डवप्रशंसां विधाय प्रतिनिवृत्तमिति मन्ये । न तु प्रवसन्त्यः प्रकृतयो निवारिताः । न च क्षुभ्यन्त्यः प्रकृतिभावमुपनीताः ।

**सञ्जयः** — किमिदं मम अन्यस्य वा शक्यं भविष्यति ? तात्कालिकं किमपि प्रियमुक्त्वा कियदिवानुनीताः प्रजासमुदायेकेऽपि वर्गाः ।

**दुर्योधनः** — तेन हि पश्यतु भवान्राजानम् ।

**सञ्जयः** — तथा । (इति निष्क्रान्तः)

**दुर्योधनः** — 'किमिदं मम अन्यस्य वा शक्यं भविष्यति' ? पश्यामस्तावत् — किं शक्यं भविष्यति न वेति । कः कोऽत्र भोः ?

(प्रविश्य)

**प्रतीहारकः** — देव, अयमस्मि वातायनः ।

**दुर्योधनः** — वातायन, उच्यतां दण्डनाथः ।

> यो यः स्तौति पृथासूनून् यो यो भ्रश्यति वा पुरात् ।
> स स कारागृहे सद्यो निर्विमर्शं निरुध्यताम् ॥ १७ ॥

**प्रतीहारकः** — यदेव आज्ञापयति । (इति निष्क्रान्तः)

**कर्णः** — काममभोघः प्राप्तकालश्चैष तुरीयः प्रयोगस्सामभिरसाध्यासु प्रजासु ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — अवितथमेतत् । परन्तु कदाचित् हठप्रयोगेनाधिकतरं विक्रियन्ते प्रजाः । न तु खलु हास्तिनमखिलं कारायां निरोद्धुं प्रभविष्यति सुदूरं परिक्रुद्धोऽपि कुरुराजः ।

दुर्योधनः — "किमिदं मम अन्यस्य वा शक्यं भविष्यति" । पश्यामस्तावत् किं शक्यं भविष्यति न वेति । मातुल, न केवलं सर्वमपि हास्तिनं कारायां निगडयिष्यामि । शूलेऽप्यारोपयिष्यामि ।

शकुनिः — (स्वगतम्) निरवद्यस्सङ्कल्पः । (प्रकाशम्) राजन्, कोऽयमस्थाने तव प्रजाक्षोभमन्तरा भृशं व्याकुलीभावः । पश्य,

अयं कृतघ्नः खलु सर्वतो जनः
स्मरत्यलं न प्रकृतोपकारिणम् ।
प्रशंसति प्रस्खलितानुभावकं
स्थिरानुभावद्युतिमत्यसूयया ॥ १८ ॥

अपि च; भूसुराणामयं धर्मो यत्स्तुवन्त्यन्नदायिनम् ।
अद्य चेत्पाण्डवज्येष्ठं श्वस्त्वामन्यं परेद्यवि ॥ १९ ॥

अक्लेशेन भैक्ष्यलाभात्संभृतोत्साहानां विप्राणां कोऽप्ययं कोलाहलो लोकेषु प्रतिशब्द्यमानो नचिरात्स्वेनैव विरंस्यति । हठप्रस्तावेन तु स एव तुमिलीभूयात् । यतः,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्धन्ते निगृहीतानां विकाराः खलु दोषिणाम् ।
क्रोधमुत्सृज्य धीमद्भिस्ते प्रशाम्यन्त्युपेक्षिताः ॥ २० ॥

तदलं चिन्तया । एहि राजन्, कीदृशस्ते पणः

(इत्यक्षान् विक्षिपति)

**दुर्योधनः**—(सवैलक्ष्यम्) मातुल, मिथ्या नामोपकृतमेतैः पाशकैः । तैरेव व्यवहरता च भवता । तन्नेतः परं युवाभ्यां क्रीडिष्यामि । (इत्यक्षानवकीर्य परावर्तते ।)

**शकुनिः**— अयि गान्धारीमातः, अतिक्रूतघ्नः खल्वसि ।

कठिनभुजबलांस्तानाकलय्याविजय्यान्
शरणमिति समागाः किं न मां दीनवाचा ।
रिपुमदकरिणस्तान्नालमातैरिवाक्षैः
क इव दृढमनह्यन्मातुलो मातुलश्चेत् ॥ २१ ॥

अवितथं खल्वेतद्यदुच्यते ।

सेवमानस्य विभवस्सर्वस्वमुपयुञ्जते ।
निष्पीड्येक्षुमिवास्यन्ति तं पुनः कृतसेवनम् ॥ २२ ॥

अयि राजन्,

शप्स्यस्यस्मीभिरेवाक्षैस्समक्षं मातुलस्य ते ।
नाहोषां प्रसादेन राजा निर्वैसिसीसिति ॥ २३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्योधनः — मातुल, मातुल, मर्षयेदानीम् । न खल्वेवं वक्तुकामः ।

शकुनिः — ( सक्रोपोपहासम् ) उपपन्नमेतत् । राजानः खलु निर्लज्जमात्मापलापं कुर्वाणा अपि सत्यवादिन एव प्रभुशक्तिसामर्थ्यात् । "न ह्येवं वक्तुकामः" । तत्कथयतु भवान् किं वक्तुकाम इति ।

दुर्योधनः — मातुल, कुतो नु मेऽद्य शत्रुभयप्रशमः ? पश्य,

आक्रोशेन करालिताः प्रकृतयो नेच्छन्ति राज्ये स्थितिं
साशंसाः पुनरेव पाण्डवजये सर्वे ममैवाश्रिताः ।
वैरिक्षेमपरायणैरभिवृतो वन्धुब्रुवैरस्मि भोः
कष्टं पाण्डुसुता हृदि क्रकचवद्धात्रा ममासञ्जिताः ॥

अन्यच्च,

न समयमवपात्य प्रत्युपेष्यन्ति पार्थाः
न च मम कुलवृद्धा एव तानानयेयुः ।
अपि च यदुविदर्भानर्तपाञ्चालभोजा-
स्सपदि मयि विकर्तुं संहता मन्त्रयन्ते ॥ २५ ॥

किञ्च, निर्वासितानपि वनावनिगोचरान-
प्युच्चैरमून्दिविषदः परिवर्धयन्ते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ते चापि दीर्घनियमा इव दीक्षितेन्द्राः
कुर्वन्ति मय्युचितकालपशुप्रतीक्षाम् ॥ २६ ॥

तेन ह्येष मे वस्तुपरिच्छेदः ।

अक्षैर्लघु समाकृष्टा श्रीरियं विषमा मयि ।
सा प्रसीदति शौर्येण सिद्धा शत्रुनिबर्हणात् ॥ २७ ॥

**कर्णः** — उपपन्नमाह कुरुराजः । वनस्था अपि पाण्डवा मूर्ता अस्माकमनर्था एव ।ताननुत्सार्य न नः कदापि हृदयविश्रमो भवितुमर्हति । तेन हि व्यपैत्वद्यैव महाराजस्य ज्वरः । ध्वंसन्तां च बहिरन्तर्वर्तिनां पाण्डवानुकम्पिनामाशंसाग्रहाः । अद्य निर्वेक्ष्याम्यानृण्यं महाराजप्रणयस्य । निहन्म्यचिराद्वनस्थानेव पाण्डवान् । केवलं दुःशासनो मामनुगच्छतु ।

परिचितमुनिचर्यादुर्गतक्षत्रधर्मान्
विरलबलसहायान् रंहसा सन्निपत्य ।
धृतकवचकृपाणौ निर्हरावः परस्ता-
दविदितगतिभाजस्ताञ्जनः कोऽधिगच्छेत् ॥ २८ ॥

**दुर्योधनः**— वयस्य, कर्ण, अतिदुर्जनः खल्वासि । कथं सुयोधनं षण्ढमिव साहसोपक्रमेष्वपवर्जयासि । मम खलु भीमसेनशोणिताब्धिपारणोत्सुकं निस्त्रिंशवाडवज्योतिः प्रज्वलति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कर्णः**— प्रथमः कल्पः । तथैव मे मत्सरो गाण्डीविनि ।

**शकुनिः**— (स्वगतम्) कीदृशोऽयं मूर्खाभिसन्धिः । (प्रकाशम्) किं युवां गगनाङ्गणवल्लरीपुष्पावचयं करिष्यथः । कुतः काम्यकेऽधुना भीमार्जुनौ ।

**दुर्योधनः**— हन्त भोः सर्वतः प्रतिहतप्रसराः स्मः ।

**शकुनिः**— राजन्, किमेवमात्मा स्वेनैवायास्यते । निस्तुलोऽद्य हि प्रकाशसे । कुतस्त्वां चिन्तानीहारस्समवरुद्ध्यति । पश्य,

परिभवमलिना वने विपक्षा-
स्तव निखिला पृथिवी वशंवदेयम् ।
अथ रिपुहननं प्रतीक्षसे चेत्
प्रकुरु रणं न भियेव सुसहत्याम् ॥ २९ ॥

परन्त्वकालोऽयं रणस्य । यत्समयेन निरुद्धास्ते आद्वादशवत्सरपूर्तेर्न स्मरिष्यन्ति त्वयि वैरनिर्यातनम् । असांप्रतं खलु स्वयमनुद्युक्तस्य शत्रोर्लघीयसोऽपि प्रतीपाचरणैर्वैरोद्बोधनम् । किमुत भीमकर्मणां पाण्डुसुतानाम् । व्रीडाकरश्चायमुदासीनवधोत्साहो युत्रयोः । यदि मे मतमनुमन्यसे निबोध मे मन्त्रसारम् !

हित्वा शत्रुगतां चिन्तां निर्विश स्वां नृपश्रियम् ।
चिन्तय प्रियमाहर्तुं प्रकृतीनां प्रयत्नतः ॥ ३० ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्योधनः— मातुल, सबहुमानमवहितोऽस्मि ते निरवद्ये नयोपन्यासे। किंतु न शक्यं मे शत्रुगतां चिन्तामपहाय स्वैरं निर्वेष्टुं राज्यश्रियम्। यतः;

कथञ्चित्सामदण्डाभ्यां प्रजाक्षोभो विनीयते।
एभिः प्रतीपमन्त्रैर्हि स्वजनैरस्मि दुर्गतः॥ ३१॥

अपि च महदेतद्दुर्निमित्तमिदानीं यत्प्रागेव पाण्डवसुहृत्पुनरपि च सद्यो युधिष्ठिरेण सङ्गम्य प्रतिनिवृत्तः क्षत्ता महाराजं समुपजुष्टः।

अद्य भीष्माद्यनूक्तेन विदुरेणोपजापितः।
पाण्डवानचिराद्राजा नूनमानाययिष्यति॥ ३२॥

(प्रविश्य)

पुरोहितः— विजयतां कुरुकुलमहोदयो गान्धारीतपःपरिपाकः।

शकुनिः— राजन्, एष कुलगुरुस्त्वामाशिषा वर्धयति।

दुर्योधनः— नमो भवते। अलङ्क्रियतामासनम्। (जनान्तिके) मातुल, अस्यागमनप्रयोजनमन्तरेण शङ्कते मे चेतः।

पुरोहितः— (उपविश्य) गान्धारीमातः, एवं खलु महाराजस्त्वां मद्वाचा प्रतिबोधयति।

दुर्योधनः— (जनान्तिकम्) तदेतन्मदुत्प्रेक्षितमत्याहितम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — ब्रह्मन्, कैर्नु तिष्ठति मन्त्रयमाणो महाराजः ।

पुरोहितः — न तत्र बहवः । केवलं काम्यकप्रतिनिवृत्तेन विदुरेण मन्त्रयते ।

दुर्योधनः — (जनान्तिकम्) ज्ञायते ननु । किमतो विशिष्य सन्देशश्रवणेन । प्रतिनिवर्त्यतां कथञ्चिदयम् ।

विस्यन्दन्तां प्रकृतयस्सन्धां भिन्दन्तु पाण्डवाः ।
धिन्वन्तु गुरवः पार्थान् कीदृशोऽस्तु सुयोधनः ॥ ३३ ॥

नूनमेष मे निश्चयः ।

उद्बन्धं वा विषं वापि शस्त्रं वा पतनं भृगोः ।
दुःखस्य भेषजं पश्याम्यस्य तातकृतस्य मे ॥ ३४ ॥

न तु पुनर्निरोधमुक्तानां पाण्डवहतकानां गर्वोन्नद्धकन्धराणि मुखानि द्रष्टुमुत्सहिष्ये ।

शकुनिः — राजन्, मा तावत् बालिशवदुत्ताम्यतु भवान् ।

नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदम् ।
आगमिष्यन्ति चेल्लोभात् पुनर्द्यूतं भविष्यति ॥ ३५ ॥

पुरोहितः — गान्धारीमातः, एवं किल प्रेमरसाभिष्यन्दिना चेतसा त्वां परिष्वज्य त्वद्धितपरो महाराजो मन्मुखेन ते संदिशति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — ब्रह्मन्, कथं नु खलु युधिष्ठिरप्रणिधिभूतस्य विदुरस्योपजापबडिशेन ग्रहणमुपगतः श्रुतिचक्षुर्महाराजः ।

पुरोहितः --अहह, सुदूरमपराध्यति वो वितर्कः । श्रूयतां श्रोतव्यम् । शतपुत्रज्येष्ठं त्वां स्नेहेनैवमुद्बोधयति पुत्रवत्सलः ।

कामं पाण्डुभुवो न धर्मसमयं न्यक्कुर्वते पञ्च ते
साग्रैर्द्वादशवत्सरैर्भुवि नृणां किं किं न संभाव्यते ।
तात, प्रत्यवधूय शत्रुविषयां चेतःपरिग्लानतां
सन्तन्याः प्रगुणैर्गुणप्रचरणैस्सद्यः प्रजारञ्जनम् ॥ ३६ ॥

यतः, अनियतमरविन्दमन्दिराया
विलसितमस्ति नियन्तुमर्हमेकम् ।
नृपतिकुलभुवां प्रजाहृदब्ज-
प्रहसनहेतुकृतित्वमेव तन्त्रम् ॥ ३७ ॥

शकुनिः— अहो सुभगः कालपरिणामः । यदीदृशानि गान्धारीजानेरपि सन्देशाक्षराणि ।

दुर्योधनः— अहो हृदयङ्गमता अपुरःप्रत्ययितानां मधुरोपन्यासानाम् । इदानीं खलु,

दवहुतवहधूमस्तोमबुद्ध्या वनान्ते
प्रतिकलितकलापं बिभ्यतो बर्हिणस्य ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अभिनवजलबिन्दुस्पन्दसन्दब्धघोषः
प्रथयति हृदि हर्षं प्रावृषेण्यः पयोदः ॥

नियतमुत्सहिष्ये तातस्याज्ञाक्षरनिर्वहणाय ।

**कर्णः**— बाढम् । कस्सन्देहः ?

**दुर्योधनः**— ममापि चेयं निवेदना तातस्य सविधं प्रापणीया ।

क्षात्रो मे पितृवद्धर्मः प्रजा मे जननी मता ।
आराधनेन वर्तिष्ये युवयोरिव चैतयोः ॥ ३९ ॥

किंच, व्यपैतु तातस्य मामन्तरेण चिन्ताव्यसनिता । यतः,

रिपूणामक्षाणामपि विदितमर्मा व्यवहर-
त्ययं गान्धाराणां पतिरतिमतिर्मे नयपथे ।
सदा दानोद्युक्तश्शरणरणभाजोर्विजयते
ममाभ्यर्णे कर्णः स्फुरदुभयकोशाहितकरः ॥ ४० ॥

इति ।

**पुरोहितः**— बाढम् ।

**कर्णः**— कुरुराज एवं प्रजारञ्जनस्य कर्तव्यत्वे प्राप्ते कीदृशमनुष्ठान-मिष्यते ?

**दुर्योधनः**— मातुल, किमत्र प्रतिपद्यते भवान् ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः-- किमत्र प्रतिपत्तव्यम् । यानेव गुणान् पाण्डवेषु प्रशंसन्ति प्रजाः तानेव स्वस्मिन्नाधातुमर्हसि ।

दुर्योधनः-- के ते गुणाः ?

पुरोहितः-- ननु भणाम्येकदेशं पौरजानपदप्रशंसापदं पाण्डवज्येष्ठे ;

जरासन्धं हत्वा भुवि समवजित्याखिलनृपा-
नुपानीतां रत्नाकरवलयसर्वस्वमुपदाम् ।
प्रियेभ्यो विप्रेभ्यस्सपदि विनियुज्य प्रभुतया
स सम्राट्संपाद्यं क्रतुमकृत लोकोत्तर इति ॥

यथा योषितस्तथा प्रजा अपि शौर्यौदार्यवता पुरुषेणैवानुरज्यन्ते ।

शकुनिः — औदार्यं करिष्यत्यङ्गराजः । शौर्यं तु पुनः–

दुर्योधनः— (सस्मितम्) मातुल एव ।

कर्णः— याजमान्यमास्थायौदार्यं करोतु महाराजः । अहमद्यैव दिग्विजयाय प्रतिष्ठे ।

पुरोहितः— बाढम् । प्रथमः कल्पः । नचिराद्दीक्षितं राजानमादरोत्फुल्लनयना निभालयन्तु प्रकृतयः । यज्ञो नाम श्रेयो हि महत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इज्याभिः परिमृज्यतेऽघनिचयः पुण्यं परं भाव्यते
विप्राणां विविधैः प्रसज्जति ततस्त्यागैस्समाराधनम् ।
सन्मार्गप्रचयप्रपञ्चितमुदां स्वर्वारवामभ्रुवां
श्लाघाश्लोकशतैर्यशो विचरति त्रैलोक्यभाण्डोदरे ॥

अङ्गराजस्यापि विजयप्रस्थानं यदि महाराजो रोचयते तस्याद्यैव शोभनो मुहूर्तः ।

**दुर्योधनः** — सखे कर्ण, परिष्वजस्व माम् । अद्यैव दिग्विजयाय त्वं प्रस्थास्यसे । समाज्ञापयाक्षौहिणीः । विजहि प्रतिवीरम्मन्यान् । याजय मां राजसूयेन । अभिषिञ्च मां सम्राट्पदे । मातुल, राजसूयेन किल यक्ष्य इति मे मतिर्जाता ।

**शकुनिः** — गान्धारीमातः, यत्सत्यं प्रकृतिमुपगतोऽसीति निर्भरमभिनन्दामि ।

नित्यं बालिशवच्छोचन्नधीरस्त्वं विगर्हितः ।
एवमुत्सहमानेन वादो नः को भविष्यति ॥ ४३ ॥

**पुरोहितः**— (स्वगतम्) कथमेवं व्यवस्यति । धिङ्मे मुखरताम् । जीवति युधिष्ठिरेऽनधिकारः खलु राजसूये कस्यापि । कथमेतदेतेभ्यो निवेदयामि । न खलु सारल्येन प्रत्यवस्यन्ते दुर्विदग्धाः । भवत्वेवं तावत् । (प्रकाशम्) अस्ति किल राजसूयस्यानवरः



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रतुरन्यः यस्त्वद्यावधि भूलोके न केनाचित्समाहृत इति विद्येत तस्य विशेषो ग्राह्यतायाम् ।

**शकुनिः** — प्रथमप्राप्तस्य परित्यागे किं प्रमाणम्? अलं मुधा विकल्पकल्पनया ।

**पुरोहितः** -- नानेकमेकदा सम्राट्शब्दः प्रतिसर्पति ।

**कर्णः** — निरवलम्बः खल्वधुना सम्राट्शब्दः ।

न तु कुमुदिनीनाथश्चन्द्रो दिवा परिकीर्त्यते
　शरदि विदितं शुभ्रं नाभ्रं तडित्वदुपाख्यया ।
गलितमहिमा सामान्यो यश्चरत्यपरिच्छदः
　स कथमधुना सम्राड्राजा न लोकधुरन्धरः ॥ ४४ ॥

**शकुनिः** — अपि च राजसूययाजिनं सर्वस्वहरणेन निर्वासितवतो राज्ञः प्राप्त एव खल्वधिकारस्तस्मिन्यज्ञे ।

**कर्णः**— कस्सन्देहः? तेन हि राजन् शृणु मे सन्धाम् ।

रविरिव समाक्रामंस्तेजोभिरेव दिगन्तरं
　सपदि विदधत्पादन्यासं शिरस्सु महीभृताम् ।
तव कुरुपते सम्राट्शब्देन साधु बुभूषतो
　वसुभरमहावर्षारम्भं प्रवर्तयितास्म्यहम् ॥ ४५ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुरोहितः -- अनुत्तरा विजयश्रीस्त्वामुपतिष्ठताम् । राजन्, महारम्भेष्वेषु तातमनुज्ञाप्य व्यग्रीभवितुमुचितम् ।

दुर्योधनः— समीचीनमुपदिष्टम् । सोऽहमधुना तातमेव द्रक्ष्यामि । कर्ण, एह्येहि । तातमनुमान्य दुश्शासनदुर्मुखप्रभृतिभिरनुयातो विजयप्रस्थानमद्यैव करिष्यसि । एह्येहि मातुल ।

शकुनिः— तथा भवतु ।

(निष्क्रान्तास्सर्वे)

इति द्वितीयोऽङ्कः ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# ॥ तृतीयोऽङ्कः ॥



( ततः प्रविशत्याकाशमार्गे नारदः )

**नारदः**— ( सानन्दानुस्मरणम् )

तं मायामयसौभपत्तनविनिर्भेदानुबन्धिक्षण-
क्षुभ्यद्वार्धिविवर्धिशौर्यविहिताहार्याभियोगोल्बणम् ।
साल्वं कृत्तवतस्सुदर्शनमुखेनानन्दसान्द्रोदयो
गोविन्दस्य विवर्तते श्रवणयोरद्यापि शङ्खध्वनिः ॥

( विचिन्त्य ) अहो दुरुच्छेद्यता अविच्छिन्नकन्दलस्य मनुष्य-लोकवैषम्यस्य ।

क्ष्मामश्वेत्यवतीर्य शौरिरधुना त्रातुं सतो दुर्गता-
न्नायातः कलिरद्य तावदपि तु क्षुभ्यत्यशेषं जगत् ।
उद्भिन्दत्सु तटीरुदग्रलहरिष्वम्भस्सु डिम्भो यथा
प्रत्याधातुमलं न विक्रमशतैर्व्यग्रोऽप्यसौ निग्रहे ॥

यदा खलु निषूदितशिशुपालः यौधिष्ठिरं राजसूयमनुमोदमानः विप्रकृष्टतम आसीद्भगवान् तदा लब्धान्तरः भ्रातृवधामर्षितः साल्वस्सोपवनप्रतोलीकां सवृष्ण्यानर्तान्धकाभिजनां द्वारवती-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवगाह्य निरन्तरं निष्पिपेष । यावच्च साल्वशिक्षणाय प्रतिगतो भगवान् तावत्कुरुकुलविषाङ्कुरः पापात्मा धार्तराष्ट्रः पाण्डवेष्व-नार्यमाचचार । तेन हि,

वनभुवि चरतस्तान्वर्तमाने तु पार्थान्
विदुरगृहनिगूढस्थापिताम्बानुकम्पान् ।
परिभवभृशदीनां शोचतस्तांश्च कृष्णां
स तु कथमविषण्णः श्रोष्यति प्रत्युपेतः ॥ ३ ॥

यत्सत्यं शतशाखं वर्धिष्णोः स्नुहिवनस्येव दुर्जनवनस्य च्छेदाय न पर्याप्तानुभावता भगवतोऽपीति प्रतिभाति मे । अथवा दैनन्दिनोदयास्तमयपर्यायमिव कल्पप्रवृत्त्युपरमानुवृत्तिमाकल-यतस्सर्वमेव खलु भगवतो लीलायितमेतत् । (विमृश्य) अथ कस्मिन्खलु प्रदेशे वर्ते । एष बत महामहसो दुर्वाससस आश्रमः । तथा हि,

अत्राहीनसुवर्णपद्मविभवा जागर्त्यमर्त्यापगा
सन्त्येतेऽवनतास्सुरद्रुमगणास्सेवास्वयंग्राहकाः ।
अप्यारुह्य दिवं भियेव सविता कान्तां विधत्ते रुचं
दूरोद्ग्रीवितसिद्धकिन्नरसुरा मूका दिशस्सर्वशः ॥ ४ ॥

(उपासीदन्)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्रष्टुमुत्सहते चेतश्शार्वं दुर्वाससं मुनिम् ।
कोपप्रसादयोर्यस्य नास्ति लोकेष्वगोचरः ॥ ५ ॥

( निरूप्य ) अये, किन्नु खलु समाधिनिवृत्तसंरम्भो मुनिः, उत क्रोधमास्थायाचिरादेवोपशान्तः । यदच्छात्रसंसत्परिस्पन्दम् आलिखितमिवेदमाश्रमपदं दृश्यते । अथवा भिक्षाटनार्थं निर्गतो भवेन्नु ( इति विमृशति ) कोऽप्येष खल्वाश्रमान्तेवासीव ।

( प्रविश्य )

**बडबामुखः**— ( साञ्जलिबन्धमुपसृत्य ) ब्रह्मन्, भगवतो दुर्वाससश्छात्रगोष्ठीपरमाणुर्वडबामुखोऽहमभिवादये । स्वागतं महातिथये । अनुगृह्यतामयञ्जनस्सत्काराङ्गीकरणेन । पवित्रीक्रियतामिदमारण्यकोचितमस्मिन्कल्पवल्लीनिकुञ्जे व्याघ्रासनम् ।

**नारदः** — वाचैव कृतमातिथ्यं प्रीतोऽस्मि बडवामुख ।
तात मन्ये गुरुस्तेऽद्य प्रवसत्याश्रमादिति ॥ ६ ॥

**बडबामुखः**— देवर्षे, न खलु वाङ्मात्रेणातिथिमोहनपरा वयमातिथ्यखलाः ।

इदमर्घ्यमिदं पाद्यमाहरामि किमीप्सितम् ।
महामुनिप्रभावेण न किञ्चिदिह दुर्लभम् ॥ ७ ॥

**नारदः**— मा भवानन्यथा मन्यताम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अप्राप्ताखिलकामानां मादृशां व्योमचारिणाम् ।
अन्तःकरणवृत्त्यैव शुद्धया क्रियतेऽर्हणा ॥ ८ ॥

**बडबामुखः** — किञ्चिद्वः परिपृच्छामि । अपि सदृशमेवं भवतो नित्यातिथिदेवस्य माहेश्वरमुनेरन्तेवासिजनेऽप्यन्तःकरणशुद्धिमन्तरा मिथ्याशङ्कापङ्कमुत्क्षेप्तुम् ।

नापहाय क्रुधं मन्तुर्न क्रोधश्शापमन्तरा ।
न शापोऽनुल्बणो यस्य स दुर्वासा न किं श्रुतः ॥ ९ ॥

**नारदः** — (स्वगतम्) व्याख्यातमनेनाकाण्डकोपिना स्वस्य दुर्वाससः प्रथमशिष्यत्वम् । नायमवसरोऽनेन मे विवदितुम् । (प्रकाशम्) अयि बडवामुखमिश्र, सच्छात्र, न मया भवन्निन्दा कलयाऽपि ध्वन्यते । परन्तु भवतश्चित्तपरिशुद्धया अहार्येण सपर्यापरिकरेण च निस्सीमानं प्रमोदमनुभवामि । उपहर समृद्धमातिथेयम् । सर्वं प्रतिगृह्णामि । अपि च तात जानामि त्वद्गुरोर्महिमपारम्यम् । तथाहि —

आकल्पपर्ययमनादृतविक्रमस्य
शम्भोरवान्तररजःपरिशोधनार्थम् ।
उद्वृत्तदृप्तसुरमानुषदत्तकम्पः
पर्याय एष भुवनेषु मुनिस्समिन्धे ॥ १० ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**बडबामुखः** — अपूर्वममुं भवतः प्रत्युपस्थानं श्रुत्वा नूनमभिनन्दिष्यति मुनिः । (इति सत्कारान्प्रयुङ्क्ते ।)

**नारदः** — (प्रतिगृह्य) अयि सच्छात्र, कं देशं पवित्रीकरोत्यधुना स सर्वसिद्धीनामाकरो भगवान् ।

**बडबामुखः** — अद्य मामभ्यागतपूजने नियुज्य भूलोकमवतीर्णः ।

**नारदः** — को नु खलु व्यपदेशः ।

**बडबामुखः** — स्वेच्छाविहारसाम्राज्यरसिकस्स भगवान् न खलु कुत्रचिद्व्यपदेशमपेक्षेत । तथाऽपि श्रूयतां वृत्तान्तसारः । कतिपयदिवसैः योगनिद्रामास्थाय ततस्सहसा प्रबुध्यमानो देवं पिनाकपाणिं द्रष्टुमिच्छामीति वदन् सत्वरं निरगात् । न्यवर्तत च मुहूर्तेन किञ्चिदिवाप्रसन्नवदनमण्डलः । अथाह चकितचकितं परितो निरीक्षमाणां शिष्यसाहस्रीम् ।

अद्य कैरातमास्थाय वेषमम्बिकया सह ।
इन्द्रकीलं गतो देवः फाल्गुनं संपरीक्षितुम् ॥ ११ ॥

तेन मोघीकृताटाट्यो न निष्ठां चेतसो लभे ।
नष्टधेनुरिव स्वामी भ्रष्टनीड इवाण्डजः ॥ १२ ॥

विनोदयितुमात्मानं प्रचोदयितुमर्हणाम् ।
प्रवणीकर्तुमातिथ्ये दृप्तानिच्छामि भूभृतः ॥ १३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततश्च प्रमोदकिलकिलारावमुखरेण छात्रसङ्घेनाव्रियमाणः प्रत्यासन्नपरिवर्तनं मामाश्रमरक्षायामतिथिसपर्यायाञ्च नियुज्य तरसा निश्चक्राम भगवान् । सुदिवसं चैतन्मे संवृत्तं भवदाराधनप्रसङ्गेन ।

**नारदः** — ( स्वगतम् ) तेन हि फाल्गुनं परीक्षितुं गत इन्द्रकीलं भगवान् भर्गः । परीक्षाप्रसङ्गे च नूनमनयोरतुच्छस्सम्मर्दो भविष्यति । महत्कौतूहलं मे मायाकिरातस्य पुरः फाल्गुनस्य विक्रमलीलायितं प्रत्यक्षयितुम । ( प्रकाशम् ) सखे बडबामुख, जानामि महामुनेरातिथ्यविधिप्रस्तावप्रचारणयोरेकान्तं पक्षपातम् । किञ्चाद्य नूनमनातिथ्यप्रवणैर्दृप्तैरवनीपालैरेव सुदुष्प्रचारा कण्टकिनी क्षितिर्जाता । तत्प्राप्तकाल एवैष भगवतः मध्यमलोकरजःपरिशोधनार्थम् अङ्गीकृतो निर्गमः । तेन ह्यापृच्छे भवन्तम् । एष स्थितो मध्याह्नः । सुविहितमतिथिपरायणेन भवता । ( इति प्रतिष्ठते )

**बडबामुखः** — गच्छतु भगवान्पुनर्दर्शनाय ॥

( इत्युभौ निष्क्रान्तौ ॥ )

## ॥ शुद्धविष्कम्भः ॥

( ततः प्रविशतः पौरजानपदौ । )

**जानपदः**— भाव, इहत्यो भवानिति तर्कयामि ।

**पौरः**— अथ किम्! त्वं पुनः कुतः ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जानपदः**— अहं समन्तपञ्चकनिवासी विश्वकर्मदासो नाम वास्तुकारः ।

**पौरः**— किमिहागमनप्रयोजनम् ?

**जानपदः**— कुरुराजो राजसूयेन यक्ष्यत इति श्रुत्वा यज्ञशाला-प्राघुणिकावसथसभानिवेशादिषु वृत्त्युपलम्भप्रतीक्षया राज्ञे स्वमात्मानं निवेदयितुमागतोऽस्मि ।

**पौरः**— अप्रतिहतस्ते मनोरथो भूयात् ।

**जानपदः** — तेन हि राजानं द्रष्टुमिच्छामि । यौधिष्ठिरे राजसूये कृतपरिचर्यस्सुप्रसिद्धः पुरन्दरदासो मे मातुलः अस्मिन्नन्तरे दिवं गतः । तस्मादेव शिक्षिता मे कला । अनेन च महाराजसेवासौभाग्यघटनेन महन्मे श्रेयो भविष्यतीत्याशं-सामनुबध्नामि । तत्सम्यगादेष्टुमर्हति भवान्ममोचितमुप-सदनमार्गम् ।

**पौरः**— सखे न मामप्रियवादिनं गणयिष्यसि ।

**जानपदः**— न कथञ्चित् ।

**पौरः**— अतिसङ्कुचितः किल पन्थाः भवादृशानां राजसकाशाद्वृत्ति-लाभप्रसङ्गस्य । अतिकोमलवयाः ह्यसि । न जानीषे लोक-वार्ताम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुशिक्षितैवास्तु कला तवेयं
कुलादिकं ते महनीयमास्ताम् ।
दुर्जातकर्णेजपमन्त्रमीलद्-
दृशां प्रभूणां क नु गोचरः स्याः ॥ १ ॥

अपि च महानेष संशयो राजा यक्ष्यते न वेति। यतस्तुमुलो वर्तते राजकुलमन्त्वः । न वृद्धास्संमन्वते जीवति युधिष्ठिरे कस्यचिद्राजसूयेन यष्टुमधिकार इति । (पुरो दृष्ट्वा) कथं मे मित्रं वसुपालः? सखे, वसुपाल, किं प्रत्यासन्नमपि मां दृष्टि-पातप्रणयविप्रलब्धं करोषि ।

(प्रविश्य)

**वसुपालः** — सखे श्रीदत्त, शपामि मे शीर्षेण । सत्यं नाज्ञासिषं त्वामिहस्थम् । क्षत्ता किलाद्य सुदीर्घां तीर्थयात्रामपदिश्य राष्ट्रात्प्रवसतीति महान्सञ्जातो नागरिकाणां चिराय दुर्लभीभविष्यन्तं सक्तस्य दर्शनमहोत्सवमनुभवितुं त्वरमाणानाम् ।

**श्रीदत्तः** — कुतः सहसा प्रवसति ?

**वसुपालः** — सखे, विदितमेव किल ते, यत् आविदुरप्रत्यानयनादप्रसन्नस्सामर्षमर्मरः कुरुराज इति ।

**श्रीदत्तः** — आम् विदितम् । स चापि सञ्जयस्तेन समाहूय निर्भरमुपालब्ध इति श्रूयते । त्वदुपजापेनैव विदुरं प्रत्यानाययामास महाराज इति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वसुपालः** — एवमेतत् । ततश्च राजसूयेन यष्टुं व्यवसितमतिं कुरुराजं दृष्ट्वा उपर्युपरि प्रचीयमानं धर्मदौरवस्थ्यं साक्षिभूततया प्रत्यक्षयितुमसहमानः धर्मात्मा द्वादशवत्सरान् तीर्थान्यटितुं प्रतिष्ठते ।

**श्रीदत्तः** — अथानुमतमिदं धृतराष्ट्रस्य ।

**वसुपालः** — पुत्रच्छन्दोनुवर्तनपारतन्त्र्येणानुमनुते ; न तु पुनरनिर्विण्णेन हृदयेन । मूढश्चासौ दुर्योधनः, आतुर इवौषधस्य विदुरस्य निरसनमात्महितं मन्यते ।

**श्रीदत्तः** — अथ विदुरावसथे स्थापितायाः कुन्तीदेव्याः कः पुनरधुना उपाश्रयः ।

**वसुपालः** — सा किल पाण्डवमाता निगूढमात्मजनपरिरक्षिता द्वारकां प्रेषिता विदुरेणेति किंवदन्ती । तेन हि वयं विदुरावसथमेव गच्छामः ।

**श्रीदत्तः** — बाढम् । (इति सर्वे परिक्रामन्ति ।)

**वसुपालः** — क एष ते सुहृत् ?

**श्रीदत्तः** — अयं विश्वकर्मदासो नाम पुरन्दरदासभागिनेयः वास्तुविद्याविशारदः राज्ञस्सेवावकाशं प्रतीक्षते । यक्ष्यमाणे राजसूये क्वचिन्मे शिक्षायास्साफल्यं भविष्यतीति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वसुपालः**— अहो दौर्गत्यं कलाज्ञानिनाम् । यदा बत सहदेवो नगरान्निर्गतस्तदैव दत्तोऽञ्जलिः कलावत्पक्षपातस्य । यतः,

अर्थकामपरा दृष्टिर्मनोबुद्ध्यात्मनां गुणान् ।
जानात्युपायपर्यायान्न स्वतः फलसम्मितान् ॥ २ ॥

**विश्वकर्मदासः**— न तावद्राजसूयनिर्वहणमेव सिद्धान्तपदमारोहति किल ।

**वसुपालः**— एवमेतत् । किन्तु राजसूयत्यागेऽपि वैष्णवः कोपि यज्ञोऽनुष्ठास्यत एव । राज्ञस्तु युधिष्ठिरप्रतिस्पर्धितया राजसूय एव निर्बन्धः । अद्य द्वारकातस्समुपागतो बलभद्रोऽपि दुर्योधनमतमेव दृढयति । पितामहादयस्तु पुरोहितमतमाद्रियमाणाः यज्ञान्तरकरणमेवोपदिशन्ति ।

**श्रीदत्तः**— कुतस्तावद्बलभद्रः ।

**वसुपालः**— स किल साल्ववधाय प्रतिगते कृष्णे सङ्क्रान्तराज्यरक्षाभारोऽपि पृथिव्या एकाधिपत्याधिगमेन वर्धमानं प्रियसुहृदं दुर्योधनम् अभिनन्दयितुमागत इति श्रूयते । अन्यदप्यागमप्रयोजनमस्य प्रतीयते कैश्चित् । यत्स्वदुहितरं वत्सलां दुर्योधनसूनवे लक्ष्मणाय दातुं काङ्क्षतीति ।

**श्रीदत्तः**— सा किलाभिमन्यवे प्रतिश्रुता शैशव एव । यत्सत्यं महदेतन्मे हृदयकदनम्, कुतो नु खलु कृष्णाग्रजस्य दुर्योधने

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पक्षपातातिशय इति । अथवा सर्वमुपपन्नं हालामदविभ्रमाधीन-मनोवृत्तेः ।

**विश्वकर्मदासः** — कुत्राधुना अभिमन्युः ?

**वसुपालः** — ससुभद्रोऽभिमन्युर्हि राजसूयान्ते द्वारकां गच्छता कृष्णेनानायि ।

( नेपथ्ये कलकलः )

**विश्वकर्मदासः** — अये, महानत्र पौरजनसम्मर्दः ।

**वसुपालः** — कोऽप्यत्र वाग्मी पौरानभिव्याहरतीव ।

**श्रीदत्तः** — साधु दृष्टम्, यतः ;

उच्चरितः स्पष्टघनं मृदुवाग्गुम्फोऽयमाप्लुतो नभसि ।
सम्भावयति विशीर्णान् सुमाञ्जलीन्नन्दने विहर्त्रीणाम् ॥

**वसुपालः** — एवं शृणुमः ।

**विश्वकर्मदासः** — अतिमात्रं चित्तविद्रावणेनोपन्यासवस्तुना भवितव्यम् ।

**वसुपालः** — किमन्यद्वस्तु । साम्प्रतिकं राजनीतिविपर्ययमधिकृत्यैव व्याहरति । अहो वाग्मिताया अनुभावः ।

उल्लासयति वचोभिर्भावोद्रेकोर्मिसङ्कुलप्रायम् ।
श्रोतृजनसिन्धुपूरं कोऽप्येष युवा सुदर्शनाभिख्यः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीदत्तः — किं न स्मरस्येनं शाण्डिल्योपाध्यायच्छात्रेष्वन्यतमम् ।

वसुपालः — बाढम् । स्मरामि । अहो अतिघनस्सम्मर्दः । इहस्था एवावहिताः शृणुमस्तावत् ।

( ततः प्रविशत्यभिव्याहरन्पौरजानपदाभिवृतस्सुदर्शनः , तत्पार्श्वोपविष्टस्ताड्यायनश्च । )

सुदर्शनः — अयि भोः, पश्यत कुरुराजस्यानवद्यां राजसूयाभिकाङ्क्षणपद्धतिम् ।

जेतुं गते धनदमद्य मरुत्तनूजे
जेतुं गते पशुपतिं तपसा च पार्थे ।
जेतुं गते रिपुमुदग्रमथापि कृष्णे
द्रागाजिहीर्षति नृपः किल राजसूयम् ॥ ५ ॥

यस्योद्धृतेऽपि नतपर्वणि चापदण्डे
भीत्या भ्रमन्ति भुवि राजकमण्डलानि ।
धत्ते तु यो भुवनमङ्गळमव्यपायं
धर्माभिराममहिमाऽर्हति राजसूयम् ॥ ६ ॥

दुःक्षत्रियाहितमपोह्य महोपतापं
धात्रीं प्रसाद्य स हि मोचितराजसङ्घः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धर्मात्मजः क्रतुमनुत्तममन्वतिष्ठ
दादेवमानुषमभिष्टुतपुण्यकीर्तिः ॥ ७ ॥

भीमार्जुनौ व्यवहितौ स च यादवेन्दु-
रद्य त्वयोऽध्वरवरस्य हि रक्षितारः ।
स्वामी स तिष्ठति वने समयेन बद्ध-
श्चौरः किमेष न जिहीर्षति राजसूयम् ॥ ८ ॥

**पौराः** — बाढम् । चौरवृत्तिरेवासौ । कस्सन्देहः ?

**सुदर्शनः** -- राज्यं जहार कितवश्छलमेव कृत्वा

**पौराः** — बाढम्, कितव एवासौ । कितवः कितवः ।

**सुदर्शनः** -- नीचो जहार वसनं परिकृष्य वध्वाः ।

**पौराः** — धिग्धिगेनं पापात्मानम् ।

**सुदर्शनः** -- भूयो जिहीर्षति सुजातमजातशत्रो-
स्सम्राट्पदं समुपलभ्य किलान्तरालम् ॥ ९ ॥

**पौराः** — यदीमे वयं सङ्घशक्त्या प्रभविष्यामः नैष यक्ष्यते राजसूयेन ।

**सुदर्शनः** -- नो याजयन्त्वमुमुपेत्य पुरोहिताद्याः
नो दक्षिणादिकमुपाददतां च विप्राः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पौराः — प्रथमः कल्पः । एवं जाते कथमसौ यक्ष्यते ।

सुदर्शनः -- शालासभावसथनिर्मितिकर्मभिर्वा

शिल्पी न कोऽपि भजतां यजमानमेनम् ॥१०॥

विश्वकर्मदासः -- यत्सत्यं न राज्यार्धदानप्रतिज्ञयाप्यस्य कृते व्यापारमङ्गीकरिष्यामि ।

सुदर्शनः -- योऽसावुपैक्षत पितामहमाप्तमन्त्वं

पौराः — अहो, मनःप्रकम्पनोऽस्य विनयातिक्रमः ।

सुदर्शनः — योऽसौ निरस्यति हितं विदुरं विदूरम् ।

पौराः — धिक् धिगस्य मौर्ख्यम् । विनिपातोदर्कपिशुनेयं विपरीता रीतिः ।

सुदर्शनः — तस्याङ्गराजशकुनिप्रतिरुद्धबुद्धेः

पौराः — धिगङ्गराजम् । धिक् शकुनिम् ।

सुदर्शनः — आरम्भ एष हि महाजनरञ्जनाय ॥ ११ ॥

पौराः — ( हसन्ति )

वसुपालः — अहो शाण्डिल्यशिष्यस्य युक्तवादिता ।

विश्वकर्मदासः — श्रृणुमः श्रृणुमः । पुनरभिव्याहरति ।

सुदर्शनः — अयि भोः विशेषज्ञाः, पौरमहाजनाः, यत्सत्यं विस्माययति मां कुरुराजो निजया बालिशतया ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यावद्बली बकहिडिम्बनिषूदनो न
भीमो जितः स्मरति कोन्विह राजसूयम् ।
यावत्स खाण्डवदवाहुतिसाहसी वा
जिष्णुर्जितो न क इहार्हति राजसूयम् ॥ १२ ॥

अपि च —यः केशिकंसशिशुपालनिषूदनेन
चक्रायुधेन परिकर्मितमङ्गलोऽभूत् ।
यौधिष्ठिरं तमधुना किल राजसूयं
कोऽल्पोऽतिवर्तितुमलं परिभूय कृष्णम् ॥ १३ ॥

ईर्ष्याप्रदग्धमनसा गुणवद्विभूति-
विच्छित्तये विकटसम्भ्रमदम्भवृत्तिः ।
यौधिष्ठिरं कुरुपतिस्सुभगं यशः कि-
मेष प्रमार्ष्टुमलमार्यजनेष्वनार्यः ॥ १४ ॥

अम्भो वहत्प्रतिहतं भवति प्रवृद्धम्
अङ्गारराशिरनिलोपहतस्समिन्धे ।
उत्थापिताः खलजनैरुपघातधूल्य-
श्शक्ष्यन्ति किं ग्लपयितुं महतां प्रकाशम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अद्य प्रसीदति रविस्स पुरा भवानी-
जानिर्यदुप्रवर एष निरन्तरालम् ।
कालेषु वासवमुखा अपि लोकपाला-
स्सत्यार्जवप्रणयिनां न कदाऽपि हानिः ॥ १६ ॥

**पौराः**— कथयतु, कथयतु भवान्नः किमप्यद्यतनं पाण्डवाश्रमगतं कुशलवृत्तान्तम् ।

(नेपथ्ये)

उत्सरत, उत्सरत, भोः ।

**सुदर्शनः** — अयि सुहृदः, एष मे मित्रमद्य प्रगे काम्यकादुपाध्यायनिदेशेनोपावृत्तः पार्थानां वार्तां वो वर्णयिष्यति ताड्यायत्तमिश्रः ।

**पौराः** — परं नः कौतूहलम्, अवहिताः स्मः ।

(पुनर्नेपथ्ये)

उत्सरत, उत्सरत भोः ।

**वसुपालः** — श्रीदत्त, इमे वेत्रपाणयो राज्ञो रक्षिपुरुषाः ।

**श्रीदत्तः** — अग्रतश्च क्रोधपिङ्गलनेत्रो दण्डनाथः ।

**विश्वकर्मदासः** — अहो अत्याहितम् । किं नु व्यवस्यन्त्येते ।

(ततः प्रविशति रक्षिपुरुषैरनुगम्यमानो दण्डनाथः ।)

**रक्षिणः** — उत्सरत, उत्सरत भोः । (इति वेत्रैर्निघ्नन्ति)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दण्डनाथः** — भो भिक्षो, कासौ वाचालवटुः ।

**ताण्ड्यायनः** — सखे सुदर्शन, परित्रायस्वात्मानम् । एष दण्डनाथो भ्रुकुटीमाबध्य त्वां निर्वर्णयति ।

**दण्डनाथः** — अये, अयमेष राजपरिवादकः । अयि प्रगल्भंमन्य, न जानास्यात्मनो हितम् ।

**सुदर्शनः** -- बाढम्, न तु खलु यूयमिवात्महितपरा वयम् ।

**दण्डनाथः**— अरे दुर्विदग्ध, नेदानीमप्युपस्थितं विजानीषे भयम् ।

एहि क्रीडनकं धत्से हृदि त्वं पार्थिवानलम् ।
अङ्गुलिप्लोषमासाद्य न चिरेण विरंस्यसि ॥ १७ ॥

**सुदर्शनः** -- (सोपहासम्)

बाढं क्रीडनकं कुर्वे हृदये पार्थिवानलम् ।
अङ्गुलिप्लोषमाप्त्वैव विरमन्त्येनसस्तु ये ॥ १८ ॥

**दण्डनाथः** -- अरे राजापवादिन् दुर्मते अनभिमतशुभोदर्क, मुधावाचाट, एष राजाज्ञया निगृहीतो भवसि ।

**सुदर्शनः** -- काममनुतिष्ठत वो नियोगम् ।

धर्मं धिक्कुरुते राजा वयं राजपराधिनः ।
यूयं रक्षत राजानं धर्मोऽस्मानभिरक्षति ॥ १९ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहो शौर्यशीलता रक्षिपुरुषाणाम् ।

सा पाण्डवानां जननी जरार्ता
शूरैर्वियुक्ता तनयैर्न्यवात्सीत् ।
तस्याः किलाशङ्क्य बहूननर्था-
नभूयत व्यग्रतमैर्भवद्भिः ॥ २० ॥

दण्डनाथः — अये, व्यात्तमुखस्य व्यालस्य गोचरं गतो दर्दुर इव मुधा किमेवमारटसि । भीमक, बन्धनक, कर्बुरक, निगडयत, निगडयतैनं राजद्रोहिणम् ।

पौराः — हा धिक्, हा धिक्, अशरणाः स्मः ।

सुदर्शनः — (सक्रोधम्)

व्यासस्य शिष्यस्सहदेवमित्रं
कृष्णस्य पात्रं प्रणयोपहूतेः ।
शुनां किमेषां सहतेऽग्रहस्त-
मनुव्रजेयं व्रजताग्रतो मे ॥ २१ ॥

ताड्यायनः — अयि भोः मुग्धाः,

स्पृशथ यदि वपुस्सुदर्शनस्य
प्रदहति वस्तु पुरा मुकुन्दकोपः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपि च भगवतः प्रसह्य शाप-

स्तदनु च मध्यमपाण्डवस्य चापः ॥ २२ ॥

वसुपालः — साधु भोस्ताड्यायन साधु। जिता स्नेहसारेण दण्डभीरुता।

दण्डनाथः — भमिक, बन्धनक, कर्बुरक, तिष्ठत तावत्। स्वयमेवैष सुदर्शनमिश्रोऽनुव्रजति किलास्मान्। एष धृष्टो विप्रवटुरप्यानीयताम्।

ताड्यायनः — निवारितोऽप्यनुगमिष्याम्येव सुदर्शनस्य पदवीम्।

रक्षिणः — उत्सरत, उत्सरत, भोः।

दण्डनाथः — यो यस्सद्यो नापसरति स स निगृह्यतां निगडबन्धेन।

विश्वकर्मदासः — अहो क्रूरोऽध्यवसायः।

(पौराश्शनैर्निष्क्रामन्ति)

श्रीदत्तः — शङ्के दारुणं दण्डमाज्ञापयेदद्य कुरुराजस्सुदर्शनमिश्रस्येति।

विश्वकर्मदासः — धिगप्रभावं प्रकृतीनामपदे दण्डधारे राजनि।

वसुपालः — मम तु सुमहानद्यैष प्रत्ययः।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सपदि भगवान्पाराशर्यः पुरस्समुदेष्यति
प्रकृतिविषमक्रोधो वाऽन्यो मुनिस्समुपैष्यति ।
किमपि करुणामूर्तिर्देवस्स वा यदुनन्दनो
विविधविधया संरक्षिष्यत्यमुं हि सुदर्शनम् ॥

तेन ह्येतं, विदुरावसथं गच्छामः । पश्चादन्वेषयामस्सुदर्शनस्य वृत्तान्तम् । (इति त्रयोऽपि निष्क्रान्ताः ।)

**दण्डनाथः** — भीमक, बन्धनक, कर्बुरक, समाहिता आनयतैतौ राजद्वारम् । अहमग्रतो गच्छामि । (इति निष्क्रान्तः ।)

**सुदर्शनः** — सखे ताण्ड्यायन,

स्थानप्रभावः परपीडनानाम्
अर्थोपपत्तिः कृपणाशयानाम् ।
दम्भान्वितानां महनीयतेति
त्रीण्यत्र मे मर्मविघट्टनानि ॥ २४ ॥

Politics

**रक्षिणः** — इत इतः आर्यौ इत इतः । (सर्वे परिक्रामन्ति ।)

**ताण्ड्यायनः** — वराकाः खल्वैश्वर्यकामिलांदूषितसाधुदर्शनाः प्रभवः ।

कार्ष्ण्यं तनौ कोकिलकाकयोर्य-
द्रत्नाश्मनोर्यद्दृषदैकरूप्यम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जातौ च जातौ मिलितात्मनोस्त-
त्साङ्कर्यमेते व्यतिविद्रते किम् ॥ २५ ॥

रक्षिणः — इदं राजगृहद्वारम् । तदिहैव तिष्ठामो यावद्राजनिदेशमानयति दण्डनाथः । ( इति निष्क्रान्ताः सर्वे )

( ततः प्रविशति मन्त्रशालामधितिष्ठन् दुर्योधनः यथोचितमासीनाश्शकुनिबलभद्रधृतराष्ट्राश्च )

दुर्योधनः -- दिष्ट्या मामनुकम्पते आर्यः कालेष्वनुस्मरणानुग्रहेण ।

अद्य प्रेप्सितराजसूयसुकृतस्यारब्धपृथ्वीजय-
स्याराद्द्वारवतीपतिर्बत भवानास्ते प्रसन्नो यतः ।
आशंस्यं किमितोऽपि मङ्गलमतः को वा विमर्शो मम
श्लाघ्योदर्कमिदं भवेदुत न वेत्याविष्कृते कर्मणि ॥

बलभद्रः — अयि वत्स, विश्राम्यत्वतिप्रसङ्गोऽयमाचारस्य ।

यस्य द्रोणकृपौ गुरू परिबृढौ तौ व्यासभीष्मौ कुले
गान्धाराङ्गमहीभृतौ च सुहृदौ यो भ्रातृशत्यग्रणीः ।
यः स्वेनैव गदाविनोदकुतुकी संख्येषु सङ्ख्यातिग-
प्रत्यन्तावनिपालमौलिविनुतः कस्यानुकम्प्यो भवान् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रत्युत प्रार्थनीयं मे त्वयि कौरव गौरवात् ।
वत्स वैवाहिकं भद्रमावयोरस्त्वपत्ययोः ॥ २८ ॥
वत्सा मे वत्सला जातो लक्ष्मणस्ते सुलक्षणः ।
वृष्णिकौरवयोरेष संबन्धो यदि मन्यसे ॥ २९ ॥

(प्रविश्य)

प्रतीहारकः — भग्नास्ते रिपवो राजन्नङ्गराजस्य किङ्करः ।
सलेखोपायनः प्राप्तो द्वारि तिष्ठत्युरभ्रकः ॥

दुर्योधनः — वातायन, शीघ्रं प्रवेशय ।

प्रतीहारकः — तथा । (इति निष्क्रान्तः ।)

दुर्योधनः — आर्य अस्मिन्नुपोद्घाते स्वैरमनुयोज्या वयं कथमभ्यनुज्ञाप्रार्थनया विडम्ब्यामहे । सर्वथा भव्योदर्क एष प्रस्ताव इत्यवैमि यस्मिन्नासुत्रितमात्र एव दिग्विजयाभ्युदयशंसी समुपतिष्ठत एष कर्णस्योपप्रैषः ।

धृतराष्ट्रः — रोहिणिमातः, नूनमभ्युदयकाल एषोऽस्मत्कुलस्य यद्यादवधुरन्धरो भवानस्मत्संबन्धमभिकाङ्क्षति ।

शकुनिः — (जनान्तिकम्) अये सुघटितमनेन भवत्वग्रजदाक्षिण्यशीलस्य कृष्णस्य पाण्डवपक्षपातोपक्रमाणामर्गलाबन्धनम् ।

दुर्योधनः — मातुल, सर्व एष राजसूयाजिहीर्षामात्रस्य प्रत्यक्पुष्र-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधया अनुभावविशेषोल्लासः। यथाचिन्तितं समर्थिते च राजसूये (इत्यर्धोक्ते) एष प्रविशत्युरभ्रकः।

(प्रविश्य)

**उरभ्रकः** — विजयतां देवः।

**दुर्योधनः** — उरभ्रक, कुत्राधुना अङ्गराजाधिकृतोऽस्मज्जैत्रवाहिनी-सन्निवेशः।

**उरभ्रकः** — देव, विदर्भेषु विराजतेऽद्य मित्रीयता रुक्मिणा समवेतोऽङ्गराजः। अनेन च लेखेन स्पष्टीभविष्यति परिशेषः। (इत्यर्पयति)

**दुर्योधनः** — (गृहीत्वा सहर्षम्) अये मे सुहृदः कर्णस्य स्वहस्तलिखितमेतत्। (वाचयति) स्वस्ति महाराजाधिराजाय कौरवेश्वराय। एष वैदर्भसाहचर्यविवृद्धानुभावो वयस्यः कर्णः सप्रणयमालिङ्ग्य भवतो विज्ञापयति।

त्वत्सेनाध्वजमारुतो नरपते निर्विश्य सर्वा दिशः
क्रीडत्येष पटत्पटायितपटीसन्दब्धभेरीरवः।
स्तब्धान्निर्दलयन् मृदून्विनमयन् रूढान्प्रसह्योद्धरन्
संश्लिष्टान्श्लथयन्श्रितानधिवहन्कि किं न कुर्वन्नहो॥

राजन् प्रतापभानुस्ते भावयन्कीर्तिचन्द्रिकाम्।
सेनाधूलिभिरुन्मीलद्द्युतिर्दिक्षु विराजते॥ ३२॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपि च,

आहिमाचलमाविन्ध्यं नदीनगवनावृता ।
करदानप्रणयिनी प्रणीता त्वयि मेदिनी ॥ ३३ ॥

तथाहि,

प्राक्पाञ्चालकलिङ्गवङ्गमगधाहिच्छत्रहैमाद्रिका-
योध्यामोहनचेदिवत्सविषयान्निर्जित्य तूर्णं रणे ।
वैदर्भेण समागतोऽद्य कलयन्सेनाद्वयीमेलनं
पाश्चात्यानपि यामि जेतुमचिरात्—

(इत्यर्धोक्ते) (स्वगतम्) किमेतदकालोचितं वैधेयस्य ।

**बलभद्रः**— किमन्ते सावशेषमिव ।

**दुर्योधनः** — (हसितमभिनीय) अहो कर्णस्य सर्वकाले कैशोरानुरूपा चित्रकौतुकिता। पूरयत्येष हि वृत्तं मुद्रालंकाररीत्या 'शार्दूलविक्रीडितैः' इति । (पत्रिकां शकुनिहस्ते समर्पयति) शैली

**उरभ्रकः**— कटाक्षयतु स्वामी सामन्तसमुद्रोन्मथनाविर्भावितानि रत्नजातान्यमूनि ।

तारानिभग्रथितमौक्तिक एष हारो
युष्मत्प्रसादनरसाद्द्रुपदेन दत्तः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतद्युगं च मणिकुण्डलयोः प्रभाभि-
रात्मानुरागपिशुनं प्रहिणोति रुक्मी ॥ ३५ ॥

**दुर्योधनः**— पश्यत्वार्यः । सर्वमेतद्वधूवरयोः प्राभृतकं कल्पयिष्यते । उरभ्रक, दर्शयानुपूर्वशस्सर्वमार्यस्य ।

**उरभ्रकः**— तथा (इति बलभद्रस्योपनयति ।)

**दुर्योधनः**— (जनान्तिकम्) मातुल, किमेष कर्णोऽस्मदाशंसालवेषु शार्दूलविक्रीडितमेव कर्तुकाम इव भाति । यत्सानर्तवृष्ण्यन्धकानेष पाश्चात्यानभियास्यति ।

**शकुनिः**— नूनं दुर्मेधसस्तस्य रुक्मिहतकस्योपजापेनैष द्वारकामप्यभिगन्तुमीहते । तत्प्रेष्यतामविलम्बेन प्रतिषेधः ।

**दुर्योधनः**— मातुल, केन पुनरद्य विधिना कालातिपातो रक्षणीयः स्यात् । कदाचिदेतात्रैव कर्णरुक्मिणौ वृष्णीनभिद्रवतः ।

**शकुनिः**— उरभ्रक, कियन्ति दिवसानि कुण्डिने निवत्स्यत्यङ्गराजः ।

**उरभ्रकः**— यावद्वैदर्भो निजसेनासमुदयमुच्चिनोति । सर्वथा मासमात्रे प्रस्थास्यति सानर्त्त-

**शकुनिः**— उरभ्रक, किं जानासि दूतधर्मम् । राज्ञः पुरो मास्म भूर्विश्रृङ्खलजल्पः । सुनिश्चितमेवार्थं प्रतिपादयितुमर्हसि; न तु

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्भावनाप्रायम् । अपि च प्रश्नस्योत्तरदानमात्रेणोपरन्तव्यमनुचरेण ।

**उरभ्रकः**— (सभयम्) सम्यगधुना शिक्षितोऽस्मि स्वामिना ।

**दुर्योधनः** — आर्य, महार्घावेतौ रत्नकेयूरौ भविष्यतः । उरभ्रक, कस्येयमुपदा ?

**उरभ्रकः** — देव, वत्सेश्वरस्य ।

**बलभद्रः** — उरभ्रक, मासमात्रे समग्रीकृतपरिच्छदौ प्रस्थितौ कर्णरुक्मिणौ कं देशमभियास्यतः ?

**उरभ्रकः** — अद्य भवाद्भिः पृष्टोऽहमिति ब्रवीमि । वृष्ण्यन्धकानर्तान्समूलकाषं निष्कषितुं गमिष्यतः ।

**दुर्योधनः** — अरे, मूढ, कथं त्वं जानासि ? किं भविष्यद्दर्शी त्वं सर्वज्ञः ।

**उरभ्रक** — मा तावन्मयि कुप्यतु देवः । तस्मिन् लेख एव किलाविष्कृतोऽयं विषयः सानर्तवृष्ण्यन्धकान् इत्यन्ते लिखता स्वामिना अङ्गराजेन ।

**बलभद्रः** — वत्स, मा स्म भूः कातरः । परमार्थवादी खल्वेष उरभ्रकः । भवतु यथा तथा वा । किन्तु परावस्कन्दस्य लक्ष्यीभविष्यमाणे नगरे साम्प्रतं मदसन्निधानं नाम मयि दोषमुत्थापयिष्यति । न तावत्कृष्णोऽपि प्रत्युपावृत्तः । तत्सद्यो मामनुजानीहि द्वारकां प्रतिनिवर्तनाय ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्योधनः — आर्य, प्रेषयाम्यधुनैव वार्ताहरं कर्णाय वृष्ण्यन्धकेषु तस्यामित्रबुद्धिं प्रतिषेद्धुम्। न भवानेतावन्मात्रे चिन्तायासं कर्तुमर्हति। विधेयः खलु भवतोऽत्र सर्वोऽपि जनः।

बलभद्रः — वत्स, उपपन्नमेव ब्रवीषि। परन्तु, यावन्न सन्निहितस्तत्र कृष्णः तावन्ममापि प्रवास इति नानवद्यं पश्यामि। अपि च, खलपरिचयो नाम प्रमादयिष्यत्यङ्गराजम्। स्त्रीबालप्रायञ्च राजकुलमनाथं परितप्येत। त्वदभिनन्दनमात्रायागतोऽहमद्य पूर्णमनोरथः किं भूयो विलम्बे।

धृतराष्ट्रः — रोहिणीमातः, कथं त्वदभिनन्दनमात्रायेति। अभिनन्दनाङ्कुरितं प्रमोदं वत्साया वत्सलाया अभिरूपवरघटनमहोत्सवेन सफलीकर्तुमुदसहिष्ट खलु भवान्।

बलभद्रः — न खलु वरमन्वेषन्ते कन्यापितरो राजन्याः। तुल्यकुलशीलाः प्रार्थयन्ते दूतमुखेन कन्यां कुमारेभ्यः। वृद्धस्य भवतो न खल्वेष समुदाचारो न विदितः। केवलं सुयोधने वत्सलतया सारल्येन संबन्धवार्तामासूत्रयम्।

सुयोधनः — कस्सन्देहः? आर्यस्य सर्वदा खल्वियं मयि वत्सलता। आर्य, अद्य सर्वसामन्तमहीपालोपदीकृतरत्नजातप्राभृतकेन कर्णमेव द्वारकां गतं भवन्तं मत्सूनवे कन्यां वरयितुं लेखमुखेनादिशामि।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बलभद्रः—भवतु नाम । तेन ह्यापृच्छे भवतस्सर्वान् । उपस्थाप्यतां मद्रथः ।

दुर्योधनः — कः कोऽत्र भोः ।

( प्रविश्य )

प्रतीहारकः — किमाज्ञापयति देवः ?

दुर्योधनः — वातायन, शीघ्रमुपस्थाप्यतामार्यस्य रथः ।

प्रतीहारकः — तथा ( इति निष्क्रान्तः )

दुर्योधनः — आर्य, भवदनुज्ञाबलेनैव राजसूयं निर्वर्तयितुमाशंसा मम । तत्काले सन्निधानेनानुगृहीतव्योऽयमाश्रितो जनः ।

धृतराष्ट्रः — रोहिणीमातः,

प्रार्थनीये प्रतिष्ठे द्वे प्रसन्ने भवति ह्यमू ।
यजनं राजसूयेन सम्बन्धो भवतामिति ॥ ३६ ॥

( प्रविश्य )

प्रतीहारकः — सज्जो रथः ।

बलभद्रः — सर्वदा प्रसन्नोऽस्मि यदि मत्प्रसादरसिद्धिकारी ।

( इति निष्क्रान्तः )

दुर्योधनः — वातायन, सूतमिह प्रेषयाविलम्बेन । मातुल, सन्दिशामि किल कर्णाय । जैत्रयात्रा चैषा वैवाहिकमङ्गलाङ्कुरक्षेपेण मनोज्ञनिर्वहणा भवतु । वातायन, किं विलम्बसे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

politics

**प्रतीहारकः** — देव, दण्डनाथो द्वारि तिष्ठन्विज्ञापयति । राजनिन्दकौ द्वौ वटू निगृह्यानीतौ । दण्डपातने देवः प्रमाणमिति ।

**दुर्योधनः** — कावेतौ वटू । प्रविशतु तावत्ताभ्यां दण्डनाथः । वातायन, शीघ्रमिहाज्ञापय सूतम् ।

**प्रतीहारकः** — तथा (इति निष्क्रान्तः)

**दुर्योधनः** — (विलिख्य) मातुल, पश्यतु भवानिदम् ।

(प्रविश्य)

**सूतः** — देव, किमाज्ञापयसि ?

**दुर्योधनः** — सूत, लेखममुं विदर्भेषु तिष्ठतः कर्णस्य हस्तमनिलजवेन प्रापयितुमर्हसि । उरभ्रक, त्वमपि रथेनैव गत्वा ते स्वामिनो हस्त एवार्पयिष्यसि आभरणजातान्यमूनि ।

**शकुनिः** — उरभ्रक, ममापि वचनमिति विज्ञाप्यतामङ्गराजः । योधसामान्यो दूताधिकारं नारोपणीयः । दूतसामान्यस्य च लेखवस्तु न प्रकटनीयमिति ।

**सूतोरभ्रकौ** — तथा (इति निष्क्रान्तौ ।)

**दुर्योधनः** — (सस्मितम्) अन्वर्थनामधेयोऽयमुरभ्रकः ।

**शकुनिः** — अहेतुफलसंबन्धव्यवगाहोऽपुरश्वरः ।

अहो जडानामुन्मेषो वन्ध्याभ्यासनिदर्शनः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( दूरान्निर्वर्ण्य ) अयमुपस्थितो रसान्तरस्योद्दीपनविभावः ।

**दुर्योधनः** — अये एष खलु सहदेवमित्रं पाण्डवभाग्योपजीवी । तत्स्थाने मध्यस्याक्रोशः ।

**धृतराष्ट्रः** — किं व्यासभगवतश्शिष्यस्सुदर्शनः । वत्स, कदाचित् हितवादिनोऽपि निजलक्ष्यैकान्तमनोवृत्तिभिर्निन्दाप्रवृत्ता इव गृह्यन्ते । तत्राहंस्यक्षमतया दण्डं निपातयितुं त्वामन्तरेण सापवादेऽपि ब्राह्मणजने ; विशेषतो व्यासशिष्ये ।

(ततः प्रविशति दण्डनाथः पश्चाद्रक्षिभिरवेक्षितौ सुदर्शनताड्यायनौ च ।)

**दण्डनाथः** — विजयतां देवः । एष सुदर्शनमिश्रः प्रकृतीरभिव्याहरन् देवस्य राजसूयेऽनधिकारं व्याघोषयामास । इदं चैतस्याभिव्याहरणवस्तु यथाश्रुतं मत्प्रणिधिवर्गेण सङ्गृहीतम् । (इत्यर्पयति) एष च ताड्यायनमिश्रः सुदर्शनमिश्रस्यानुलोम्येन प्रवृत्तः । न तु पुनरनेन किमप्यभिव्याहृतं प्रकृतिषु ।

**दुर्योधनः** — ( लेखं वाचयन् सक्रोधम् ) अयि राजापवादक,

**सुदर्शनः** —

अपवादः प्रशंसा वा ब्राह्मणा धर्मशंसिनः ।
तौ पाराशर्यगाङ्गेयौ प्रमाणत्वमिहार्हतः ॥ ३८ ॥

किञ्च —

पितामहं योऽवजज्ञे विदुरं यो व्यवासयत् ।
यश्चोद्विजयते व्यासं सोऽपवादेषु कातरः ॥ ३९ ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शकुनिः**—किन्ते न श्रुतिपथमवतीर्णं कुरुराजस्योग्रं शासनाक्षरम् ।

**सुदर्शनः**— श्रुतमवधृतं च ।

**दुर्योधनः**— अरे, पाण्डवानुचरापशद, दुर्मते, क एष ते चौरः? क एष ते कितवः? अनुभोक्ष्यसे विषमां वाक्चापलस्यास्य परिणतिम् । किं सुयोधनेऽपि शासितर्येतादृशा उच्छृङ्खलास्सञ्चरन्ति लोके । कः कोऽत्र भोः ।

(नेपथ्ये)

अयमहं भोः ।

**दण्डनाथः**— देव, एष तिष्ठाम्यग्रत एव निदेशवर्ती ।

**धृतराष्ट्रः**— प्रतिहारभूमौ कोऽपि भिक्षार्थीव ।

**दण्डनाथः**— आदिशतु देवः ।

**दुर्योधनः**— छिद्यतामस्य राजापवादनिरङ्कुशा जिह्वा । अथवा तिष्ठ —

(नेपथ्ये)

अयमहं भोः, अये किमिदं विपन्नाभ्युदयं राजकुलम् । यदतिथिमुपस्थितं मां न कोऽपि प्रत्युपतिष्ठते ।

**धृतराष्ट्रः**— वत्स, अपराधः अपराधः । गच्छ, प्रसादय । कोऽप्येष कोपनो मुनिः ।

(प्रविश्य)

**प्रतीहारकः**— देव महर्षिः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्योधनः — कोऽसौ महर्षिः ?

शकुनिः — वातायन, अलं संभ्रमेण ।

प्रतीहारकः — सहस्रशिष्यपरिवृतः, कालाग्निरिव ज्वलन् शापमादत्ते ।

धृतराष्ट्रः — अहो धिक् प्रमादः ।

दुर्योधनः — तात, समाश्वसिहि, समाश्वसिहि ।

प्रतीहारकः — भिक्षार्थी । कुप्यतस्तस्य स्फुलिङ्गावृतमिवान्तरिक्षमादीप्यते ।

धृतराष्ट्रः — अहो प्रमादः । अहो अत्याहितम् । एष खलु दुर्वासाः ।

( नेपथ्ये )

अयमहं भोः । अन्धमिदं राजकुलं मया श्रुतम् । अद्य बधिरमपि । अरे, वृथोत्सिक्त, कौरवपशो, अयं न भवसि ।

दुर्योधनः — हा धिक् । अधर्मम्, अधर्मम् । अयमहमागतोऽस्मि । मर्षयतु भगवान् । मातुल, अवलम्बस्व तातम् । एषोऽस्मि भवतः किङ्करः । मर्षयतु भगवान् ।

( सुदर्शनताड्यायनवर्जं सर्वे ससंभ्रमं निष्क्रान्ताः ।)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सुदर्शनः** — ताड्यायन, जागर्ति खलु दैवम्। अङ्कुश एष तीव्रतरो विनिहितः कौरवगन्धद्विपस्य मूर्धनि।

**ताड्यायनः** — येन चिरायैष न प्रेङ्खिष्यति मुग्धमातङ्गः।

**सुदर्शनः** — तेन ह्यागच्छ, यथाध्यवसितं काम्यकमेव गच्छावः।

(उभौ निष्क्रान्तौ)

इति तृतीयोऽङ्कः॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ चतुर्थोऽङ्कः ॥



(ततः प्रविशतस्सङ्गतिकाकुञ्जरिके)

**सङ्गतिका** — हला, अनेन मद्विलम्बेनापराधो वर्धते । तद्विसृज मां भर्तृनीदर्शनाय ।

**कुञ्जरिका** — निष्प्रभावमद्य परवत्तया राजकुलम्, कुतः परिजनापराधेष्वमर्षं धारयितुमुत्सहिष्यते । हला, उन्मत्तकल्पेऽस्मिन् मुनिपाशे कथं स्वभावदुर्मदोऽपि महाराजो दासवद्वर्तते । नात्मक्लेशं गणयति । स्वयमनुतिष्ठति परिचर्याम । न प्रकामं निद्राति । न मुहूर्तं विश्राम्यति । अनारतञ्च सन्त्रासस्विन्नगात्रः प्रह्वीभवन्निषेवते तस्य पादमूलम् ।

**सङ्गतिका** — अयि दुर्विदग्धे, शापप्रस्फुरिताधरोष्ठस्स किल दुराराध्यो मुनिः । कुपितश्चेत्स लोकत्रयमपि प्रदहेत् । मा नाम तमवज्ञया भण । निर्धूतलौकिकसङ्केतपारतन्त्र्याः खलु महान्तः उन्मत्ता इव कुत्सितवृत्तय इव च दृश्यन्ते आपातदर्शिनाम् । परन्तु ते तेजोधामानः किञ्चिदवज्ञाता रौद्रमंशमाविष्कुर्वन्ति । भर्गपर्याय एष महामुनिर्दुर्वासाः । को हि नाम तं नाराधयेत्समाहितः श्रेयः कामयमानः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कुञ्जरिका** — हला, अस्तु नाम तपःप्रभावः। न तु पुनर्विप्रलपितुं पारयिष्यस्यमुष्य चेष्टितानामुन्मत्तरूपताम्। तथाहि —

सकृत्स्तोकं भुङ्क्ते सकृदपि समग्रं प्रणिहितं
सकृत्क्षिप्त्वाऽमत्रं हसति वपुरालिप्य विघसैः।
बुभुक्षा हा हेति प्रणदति सकृत्कुप्यति पुन-
स्समाहूतो भोक्तुं सकृदुपरतो ध्यानमयते ॥ १ ॥

पश्य सङ्गतिके, न केवलमयमुन्मत्तः। किन्तु महान् दुर्जनोऽसौ दुर्वासाः। यतः,

मृष्टान्नं कारयित्वा नियममपदिशन् शाकमेकं न भुङ्क्ते
संव्याहृत्योपवासं परिपतति नदन्नाशु मां भोजयेति।
भुक्त्वैवाकण्ठपूरं क्षणमनुभवतो विश्रमं रौति भर्तु-
र्दत्तातङ्को बुभुक्षा शिव शिव मदसून् कृन्ततीत्यर्धरात्रे ॥

किञ्च, अनुमान्यैव भोक्तव्यमनु तं दुःखभोजिनम्।
तत्प्रतीक्षावशाद्भर्तुरस्त्युपोषणनित्यता ॥ ३ ॥

**सङ्गतिका** — अयि वाचाले, नेदृशानि मन्त्रयितुमर्हसि। अचिन्त्यरूपस्यानुग्रहमङ्गलस्य नियतपूर्वाणि खल्विमानि अधिकार-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शोधनौपयिकानि करुणाकराणां महामहसामुपमर्दनानि नाम । तत्सुसंयतं मन्त्रयस्व । मा त्वामपराधः स्प्राक्षीत् । कुञ्जरिके, चिरं खलु स्थिताऽस्मि । एभिर्दिवसैरनियतभोजनेन मुनिपरिचर्याश्रमेण च परिग्लानाङ्गलता भट्टिनी शीर्षवेदनया विषीदति । तस्या अनुलेपनं त्वरयितुमागच्छन्ती त्वयैवं व्याहरन्ती तिष्ठामि ।

**कुञ्जरिका** — तेन हि गच्छ त्वम् । अहमपि महाराजनिदेशेनार्यविदुरगृहं गत्वा पृथादेवीं द्रक्ष्यामि ।

(निष्क्रान्ता सङ्गतिका)

**कुञ्जरिका** — स्वयं कृतोऽयमनर्थो राज्ञा । अद्य खलु चीराजिनव्याघ्रचर्मदर्भमुष्टिव्याकीर्णमिदं राजकुलं भल्लूकनिर्विशेषाणां लम्बकूर्चानां स्वगृहं संवृत्तम् । (दृष्ट्वा) हा धिक्, कथममुमेव देशमुपावर्तते कोऽपि भल्लूकयुवा । कष्टमन्तःपुरप्रतिहारोऽप्येवमीदृशानां वनौकसामनिवारितप्रवेशयोग्यस्संवृत्तः । किमेष धूर्तो मां निर्निमेषेण चक्षुषा निध्यायति ।

(प्रविश्य)

**कौक्कुटायनः** — अये केयमीदृशी मनोहारिणी । तथाहि—

जाड्यं चिराद्धरति लोचनयोर्नताङ्गी
प्रोत्तुङ्गकुम्भिवरकुम्भघनस्तनीयम् ।
श्रीनाथनन्दनजयोद्यमसाहचर्य-
प्रेङ्खत्सुदर्शनरथाङ्गनितम्बबिम्बा ॥ ४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(उपसृत्य) अयि, सुभगे —

**कुञ्जरिका** — भोः स्वर्लोकाभिजन, नमस्ते ।

**कौक्कुटायनः** — सफलं ते यौवनं भूयात् । (स्वगतम्) कोऽयमपूर्वोऽस्यास्सम्बोधनविधिः । (प्रकाशम्) अयि चारुहासिनि, कथं मां दिवौकसमधिगच्छसि ।

**कुञ्जरिका** — अनिमेषः खलु त्वम् ।

**कौक्कुटायनः** — अयि विदग्धे, निन्दिताप्सरोलावण्याया भवत्याः पुरतो नूनमनिमेषोऽहं भवामि । किन्तु परमार्थतो न वयं दिवौकसः ।

**कुञ्जरिका** — बाढमवैमि त्वां दर्शनक्षण एव वनौकसम् ।

**कौक्कुटायनः**—

वनौका वा दिवौका वा वासु दासोऽहमस्मि ते ।
स्मितजालमवाकीर्य दृशा वक्रान्तयोद्धृतः ॥ ५ ॥

(इति पादयोः पतति)

(प्रविश्य)

**कञ्चुकी** — कुञ्जरिके, किमेतत् ?

**कुञ्जरिका** — आर्य, एष मुनिशार्दूलो मां प्रार्थयते । दिष्ट्याऽद्य जीवामि । (इति निष्क्रान्ता)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कञ्चुकी — भगवन्, किमेतत्?

कौक्कुटायनः — ( उद्वीक्ष्य ) अहो मे व्यामोहः!

शिवमात्मनि भावयतः शिवमयमखिलं च पश्यतो विश्वम् ।
यः कोऽपि भवति शम्भुर्या काऽपि च पार्वती पार्श्वे ॥ ६ ॥

यत्सत्यमद्य भवानेव मया साक्षादुपेतश्शैलादिरिव दृश्यते ।

कञ्चुकी — उपपन्नमेवेदं भवादृशेषु प्रत्यक्षितपरमेश्वरेषु । अथाद्य स भगवान् दुर्वासास्सहसाऽन्तरधीयत । कुत्र नु गतो भवेत्, कदा नु खलु प्रत्युपैष्यतीति परितप्यते सावरोधबान्धवो राजा । किं भवान् राज्ञो हृदयौत्कण्ठ्योल्लाघनाय शक्नोति मुनेर्वर्तमानं परिज्ञातुम् ।

कौक्कुटायनः — किमखिलोऽपि शिष्यवर्गः परोक्षं गतः?

कञ्चुकी — भवन्तमन्तरा विचिन्वतोऽपि नैकशिष्यजनो मे दृष्टिपथमवतरति । महत्येषा माया संवृत्ता । तेन हि भवान् राज्ञस्सकाशमागत्य मुनेः प्रवृत्तिमन्तरा संशयच्छेदं कर्तुमर्हति ।

कौक्कुटायनः — भोः कञ्चुकिन्, नाहं जानामि किमपि । कुटिलचेष्टितस्य तस्य मुनेः को वेद दुर्वैदग्ध्यानि । शपामि ते वेत्रलतया । नाहं भवामि परमार्थतो दुर्वाससश्शिष्यः ।

कञ्चुकी — अथ को भवान्?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कौक्कुटायनः** — क्वचिदग्रहाराभिजनोऽहं गुरुकुलमधिवसन्नासन्नसमावर्तनो विवाहादिकं चिन्तयन्नासम् । तदा मार्गासक्त्या तेन मार्गेण व्रजन्नसौ दुर्वासाः विहिताभिवादनं मामाह — 'भोः कौक्कुटायनमिश्र, अनुप्रविशास्मच्छिष्यगोष्ठीम् । विचित्राण्यातिथ्यान्यनुभोक्ष्यसे' इति । कुतः प्रत्याख्यानं नाम तस्य वचनस्य? तेन ह्यस्मि दुर्वाससश्शिष्यः । एवमेव बहुत्र शिष्यसङ्ख्यापूरणं महर्षिणा कृतम् । कष्टतमं चेदं मुनेरनुवर्तनं मे संवृत्तम् ।

अनियतभोजनवेलं परिणमदुपवासदुर्गतं प्रायः ।
सग्राहसलिलराशिस्नानमिवोद्वेगदं नित्यम् ॥ ७ ॥

दिष्ट्याऽन्तर्हितो मुनिः । अद्य मे समावर्तनमविघ्नं भवतु । तन्न मां राजसमीपं नेतुमर्हसि ।

**कञ्चुकी** — नूनं गार्हस्थ्याभिमुखो भवान् । यः कुञ्जरिकादर्शनेन सारस्यमन्वभवत् । अद्य गुरुदक्षिणाऽऽजिहीर्षयाऽपि राजदर्शनं वः प्राप्तकालम् । तस्मादुपेत्य राज्ञः कथयतु भवानात्मवृत्तान्तम् । मुनिशिष्यान्वेषणायादिष्टोऽहं न खलु भवन्तमन्तरा राजसकाशं गन्तुमध्यवस्यामि ।

**कौक्कुटायनः** — का गतिः । भोः करुणाशालिन्, वर्षवर, एतेनान्तरङ्गाभिभाषणप्रसङ्गेन मे भवानाप्तजनस्संवृत्तः । न तु खलु राज्ञस्सूचयिष्यति चेटीप्रणिपातदैन्यं मे भवान् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कञ्चुकी** — किमेवमाह तत्रभवान् ।

शिवमात्मनि भावयतश्शिवमयमखिलं च पश्यतो विश्वम् ।
यः कोऽपि भवति शम्भुर्या काऽपि च पार्वती भवतः ॥ ८ ॥

( उभौ निष्क्रान्तौ )

॥ विष्कम्भः ॥

(ततः प्रविशति शकुनिसञ्जयाभ्यामन्वितो धृतराष्ट्रः ।)

**सञ्जयः** — इदं पर्यवसन्नमाह अन्ततः पितामहः ।

ऋणमुन्मोचयिष्यामः कुलस्यास्य चिरन्तनम् ।
प्राप्ते तु सङ्गरे त्यक्त्वा प्राणान्नाऽन्यदिहास्ति नः ॥ ९ ॥

**धृतराष्ट्रः** — कथमेवमाह मे पितृव्यः । परिक्लिष्टशोभनमिवाद्य कुरुकुलस्योदर्कमुत्प्रेक्षे । यस्मिन्नेवमुदासीनो गाङ्गेयः ।

**शकुनिः** — सर्व एवैते प्रच्छन्नं पाण्डवपक्षपातिनः । धिगेतान्स्वपक्षावमानिनः । कुतः खलु प्रतिपत्तिरेतादृशेषु विजिगीषूणां राज्ञाम् । ध्वंसन्तामेते मनोरथानुरूपं संपरायेषु । अचिरादावुत्तः श्रोष्यति कर्णस्य दिग्विजयप्रभावं त्वत्सूनोश्च राजसूयावभृथमङ्गलम् ।

**धृतराष्ट्रः** — यद्युत्तरिष्यामो दुर्वाससस्समाराधनमहावाडवमुखात् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शकुनिः** — ननूत्तीर्णा एव वयम् । वरादानोत्सुकानस्मानतिसन्धाय स तु सपरिवारोऽन्तर्हितस्सहसा । अहो दौर्जन्यं माहेश्वरस्य मुनेः! असिधारास्वस्मान् चारयित्वा यो मनःपरितोषमात्रमपि नाविरकार्षीत् ।

**सञ्जयः** — मा तावदन्तर्धिरेषा शक्यविश्वासा । यतः प्रकृतिकुटिलान्यस्य मुनेश्चेष्टितानि । तथाहि —

अन्तर्हितः पुनरुपैति कृतप्रसादः
कुप्यत्यकाण्डविकृतो वरदानमीष्टे ।
वाचो नितान्तपरुषाः प्रणयाद्बिभर्त्ति
शापाशनिं हसति घोरमुपाददानः ॥ २ ॥

( ततः प्रविशति कुञ्जरिका )

**कुञ्जरिका** — जयतु महाराजः ।

**सञ्जयः** — एषा राजमातुरनुचरा कुञ्जरिका प्राप्ता ।

**धृतराष्ट्रः** — कुञ्जरिके, किं मुनेः प्रवृत्तिरुपलभ्यते पृथादेव्याः सकाशात् ।

**कुंजरिका** — देव, न तावत्पृथादेव्याः प्रवृत्तिरेवोपलभ्यते । सा किलार्यविदुरप्रवासात्प्रागेव द्वारकां नीतेति किंवदन्ती ।

**धृतराष्ट्रः** — किमकाण्डे पाण्डवमातुर्देशपरित्यागे कारणमभूत् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कुंजरिका** — एवं किल जनाः कथयन्ति । राजपुरुषैरसकृदुपरुद्धोपान्ता कातरा बभूवेति ।

**धृतराष्ट्रः** — हा धिग्धिग्गतामस्थाने शङ्काकुलतामपथे समवतीर्णानाम् ।

**शकुनिः** — आवुत्त, मैवम् । सा किल निरन्तराणां जनक्षोभानां सन्धुक्षयित्री बभूव ।

**धृतराष्ट्रः** — अहो दुरभिनिविष्टानां यत्किञ्चिदुपाधिसमर्थनसाहसिक्यम् । सा किल दुर्वाससः कृतपूर्वपरिचरणा काममभविष्यदवलम्बोऽस्माकमस्मिन्सङ्कटे यद्यत्रैव न्यवत्स्यत् ।

**शकुनिः** —( स्वगतम् ) इदमसम्बद्धसम्भावनाप्राचुर्यं नाम वार्धक्यविक्लवधियाम् ।

( ततः प्रविशति कञ्चुकिनोपनीयमानः कौक्कुटायनः )

**कौक्कुटायनः** — ( कुञ्जरिकां दृष्ट्वा स्वगतम् ) अये मां कुहनया व्यवहारपदे निरोद्धुमीष्टे वृद्धश्रृगाल एषः । यदत्रैव सा मे दुर्ललिता हृदयचोरी मदविनयमन्तरेणाभियोगमाचष्ट इव । अथवा दिष्ट्या नात्र स नृशंसस्सुयोधनः ।

**कञ्चुकी** — उपसर्पतु भवान्महाराजम् । जयतु महाराजः । एष दुर्वाससशिष्यकोटिप्रविष्टः कौक्कुटायनमिश्रः ।

**कुञ्जरिका** — ( स्वगतम् ) अहो चकितवर्णोऽयं विप्रवटुः ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धृतराष्ट्रः** — भोः मुनिशिष्य, आख्यातु भवान् कुत्र नु गतो भवेन्मुनिः कदा निवर्तेत वेति ।

**शकुनिः** — भोः, कौक्कुटायनमिश्र, तेन मुनिना सहान्तर्हितेषु सर्वशिष्येषु किमेको भवानवलगति ।

**कुञ्जरिका** — नूनं कार्यान्तरव्यापृतेनानेन स्ववर्ग्येभ्यः परिभ्रष्टम् ।

**कौक्कुटायनः** — (स्वगतम्) हताशैषा नूनमुद्भेदघुर्घुरायमाणरसना दृश्यते । कात्र मे गतिः ? (इति कञ्चुकिनं निरीक्षते)

**कञ्चुकी** — अद्यैष भगवान्मौनव्रतपर इव लक्ष्यते ।

**कुञ्जरिका** — नूनमद्यैवैष वाचालतामवलम्बमानो मयाऽनुभूतः ।

**कौक्कुटायनः** — (स्वगतम्) हा धिगज्ञाहितम् । विषमव्यवसायैषा दुष्टदासी ।

**धृतराष्ट्रः** — मा तावन्मौनव्रतस्य भङ्गो भवतु भगवतः । आलिख्यतां वक्तव्यसारः ।

**संजयः** — इदं मषीपात्रादिकम् । एषा च पत्रिका (इत्युपनयति)

**कौक्कुटायनः** — (लिखति)

**शकुनिः** — वंशीधर, गृहीत्वा वाचय लेखम् ।

**कञ्चुकी** — तथा (इति गृहीत्वा) अहो अपरिस्फुटान्यक्षराणि जरोपहतचक्षुरिन्द्रियस्य मे । (इति विमृशति)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुञ्जरिका — आर्य, उपनयात्र । अहमेव वाचयामि । (इति लेखं गृहीत्वा वाचयति )

वनौका वा दिवौका वा वासु दासोऽहमस्मि ते ।
स्मितजालमवाकीर्य दृशा वक्रान्तयोद्धृतः ॥ ३ ॥

शकुनिः — कुञ्जरिके, किमेतदसंबद्धं वाचयसि ।

कुञ्जरिका -- ननु मुनिशिष्यः प्रष्टव्यः ।

कञ्चुकी -- सर्वत्र नर्मोर्मिलरसाकूताभिभाषिण्या अस्या उपोद्घातः ।

धृतराष्ट्रः -- कुञ्जरिके, अदेशकालज्ञाऽसि । नार्हस्यपराद्धुं मुनिजनमन्तरेण ।

कुञ्जरिका — देव, मैवम् । त्वमेव मय्यपराद्धमधिगच्छताऽनेन भगवता सप्रणिपातमेषोऽनुनयः प्रस्तुतः । अत्र आर्यवंशीधरः प्रमाणम् । ( इति लेखमर्पयित्वा अन्तर्हसन्ती निष्क्रान्ता )

कञ्चुकी -- महाराज, यत्किमप्येतदप्रस्तुतम् । विश्राम्यतु विस्तरश्रवणकौतूहलम् । एष लेखः । वाचयतु गान्धारराजः ।

शकुनिः -- ( गृहीत्वा वाचयति )

अन्तर्हितोऽपि स मुनिः प्रत्युपयास्यत्यनेन लिङ्गेन ।
यन्मामप्रतिबोध्य प्रियशिष्यं सोऽन्तरैवमन्तरधात् ॥ ४ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सञ्जयः** -- ममैव हृदयेन सह मन्त्रितम् । अचिरादुपैष्यति मुनिः ।

**धृतराष्ट्रः** — तेन हि विश्राम्यतु कौक्कुटायनमिश्रः । ( निष्क्रान्तः साश्वासप्रमोदं कौक्कुटायनः )

**धृतराष्ट्रः** -- वंशीधर, वत्सस्य स्वास्थ्यप्रवृत्तिमवधारय ।

**कञ्चुकी** -- तथा । ( इति निष्क्रान्तः । )

**शकुनिः** -- ( स्वगतम् ) उन्मत्तिका खल्वियं कुञ्जरिका । अथवा मुनिशिष्येण किमप्यतिलङ्घितस्तस्यां समुदाचार इति तर्कयामि ।

**धृतराष्ट्रः** —

निर्निद्रताखटखटायितरक्तनेत्रः
प्रम्लानकान्तिरधुना प्रतिपच्छशीव ।
वत्सः कथं विषहते कृशिमानमेभि-
र्गच्छन् दिनैरमुमुपोषणमस्फुटान्तम् ॥ ५ ॥

**शकुनिः** — स्वयंकृतोऽयमनर्थः केन चिकित्सनीयो भवति । मम तु मते अपुनर्दर्शनाय गतस्स मुनिः । मिथ्यामौनव्रतश्चायं शिष्यपाशो न प्रमाणीकर्तव्यः । नेतः परमुपोषणे सामर्थ्यलेश इति मे निश्चयः ।

**धृतराष्ट्रः** —

चेत्पारणायामुररीकृतायां मुनिर्निवर्तेत न किं हताः स्मः ।
उपोषणे किन्त्वनुबध्यमाने प्राणा विनिर्यान्ति किमेवमासीत् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कतरोऽस्मिन्धर्मसङ्कटेऽस्माकमवलम्बो भविष्यति । कीदृशी वा स्यादितः प्रतिपत्तिपद्धतिः ।

गते चक्षुर्भूते सुहृदि विदुरे भ्रातरि मम
क्षते क्षारक्षेपं विदधति रुषा बान्धवजने ।
पराङ्मुख्यं दैवे भजति बत दुर्वाससि मुना-
वमुष्मिन्सौजन्यं कथमुपनिधातुं मम धृतिः ॥ ७ ॥

( ततः प्रविशति नारदः )

**नारदः** —

ख्यापयितुं पार्थजयं युधिष्ठिरस्य स्मरेदन्यः ।
अहमद्यैव दिदृक्षे सुयोधनं हन्त साधिकाशंसः ॥

कथमत्र धृतराष्ट्र एव । भवतु तावत्पश्याम्येनम् ।

वृद्धत्वादन्धत्वान्निजपुत्राणामनर्थशङ्कित्वात् ।
पार्थानामुत्कर्षे पुत्रादप्येष निर्भरासूयः ॥ ९ ॥

( उपसर्पति )

**सञ्जयः** — अहो देवर्षिर्नारदः ।

**धृतराष्ट्रः** — हन्त भोः । अर्घ्यमर्घ्यम् । दिष्ट्या जातो ममायमवलम्बः । ( उत्थाय ) भगवन्, एष वैचित्रवीर्योऽभिवादयते । अहो मे सुकृतपरिणामः ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नारदः** — नन्वासनस्थेनैव भवता नाहुषेण प्रतिगृहीतव्योऽहम् ।
(उपविश्य) अपि कुशलं भवतस्सान्वयस्य ?

**धृतराष्ट्रः** — भवितुमर्हति भवत्प्रसादात् ।

**नारदः** — कृतमस्मत्प्रसादबहुमानेन । अद्य खलु प्रसीदति भवदन्वये साक्षादेव महादेवः ।

मूकासुरप्रहरणच्छलधर्षणेन
रोषायितस्य विजयस्य तलप्रहारान् ।
गृह्णन्वनेचरवपुर्गुरुदक्षिणेति
तस्मै ददौ पशुपतिः प्रणयान्निजास्त्रम् ॥ १० ॥

**धृतराष्ट्रः** — अहो शौर्योत्कर्षपरंपरामधिश्रयति पाण्डवमध्यमः ।

प्रागेव मूर्तिपरिवृत्तिरियं मघोन-
स्संसाधितं धनुषि कौशलमप्रमेयम् ।
गाण्डीविनो वदसि पाशुपतास्त्रलाभं
रेखां परामिह हि पुष्यति वीरशब्दः ॥ ११ ॥

**नारदः** — अथ च यमवरुणकुबेरैः प्रत्यक्षीभूय साभिनन्दनं प्रत्ताभिर्निजनिजशक्तिभिर्विराजमानो विजयः महेन्द्रेणामरावतीं नीतः समुपद्रुतसुरान्निवातकवचान्निगृहीतुमुद्योजितोऽद्य महति रोमहर्षणे रणकर्मणि व्याप्रियते ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — ( आत्मगतम् ) अप्रतिनिवृत्तिर्भवतु । यथा चास्य स्वर्गाधिरोहणमन्वर्थकं स्यात् ।

धृतराष्ट्रः — सुराणामपि दुर्विजय्यास्ते निवातकवचाः श्रूयन्ते । कथं वत्स एव तानभियुङ्क्ते ।

नारदः — ( सहासम् )

वत्सेषु वत्सलतया स भवान्विधत्त
शङ्कां किरीटिनि महाव्यवसायनिघ्ने ।
स्थाता न संयति सुरासुरमानुषेषु
तस्याद्य कोऽपि समुदञ्चितकार्मुकस्य ॥ १२ ॥

शकुनिः — महर्षे, कुबेरनलिनीमभिप्रस्थितस्यार्जुनाग्रजस्य किं या काऽपि प्रवृत्तिरधिगम्यते ।

नारदः — ( विहस्य ) बाढम् । तस्य खलु महान् मार्गोपरोधो जातः ।

कनककदलीषण्डस्यान्तर्हिमाचलपालिषु
क्वचिदुरुशिलासङ्कट्टोग्रं निरीक्ष्य वनौकसम् ।
तमभिभवितुं क्षेप्तुं मार्गादतिक्रमितुं च वा
किमपि दिवसैरेभिर्भीमो दधाति महोद्यमम् ॥ १३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धृतराष्ट्रः — अहो महदिदमाश्चर्यम् । यन्नागायुतबलपराक्रमोऽपि भीमो वनौकसि कुण्ठितशक्तिर्विषीदति ।

शकुनिः — ( आत्मगतम् ) इयं दैवानुकूलघटना प्रारिप्सितस्य राजसूयस्य नूनम् ।

नारदः — कथं न पश्याम्यत्र वत्सं सुयोधनम् ।

( प्रविश्य )

कञ्चुकी — देव, प्रतिनिवृत्तः ।

धृतराष्ट्रः — वंशीधर, कः ?

कञ्चुकी — स माहेश्वरो मुनिः ।

नारदः — कथं दुर्वासा अप्यत्रैव ।

धृतराष्ट्रः — किं कुप्यति ? उत प्रसीदति ?

कञ्चुकी — न खलु क्रोधेङ्गितानि पश्यामि ।

देवी देवश्चाङ्घ्री धावयतस्तस्य शिष्यसहितस्य ।
विश्रान्तस्सोऽपि शनैरनुयुङ्क्ते सह्यतामनशनस्य ।। १४ ।।

नारदः — हस्तगता खलु वो मनोरथासिद्धिः । यदित्थं दुर्वासा अपि युष्मासु प्रसीदति ।

अक्षयपात्रमहिम्ना कुक्षिम्भरिलोकमेव भोजयता ।
किं फलमुपार्जितं भोः कृतिनो दुर्वाससा युयम् ।। १५ ।।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — ( स्वगतम् ) अहो शठः खल्वयं नारदः । ईदृशं कृतित्वमस्मच्छत्रूणामेवाशंसनीयम् ।

नारदः — भोः वैचित्रवीर्य, साधयामस्तावत् । प्रीताच्चामुष्मात्सर्वमभीष्टं प्रार्थयिष्यथ ।

धृतराष्ट्रः — साधयतु भगवान्पुनर्दर्शनाय ।

नारदः — बाढम् । प्राप्तकाले प्रत्युपैष्यामि । ( इति निष्क्रान्तः । )

धृतराष्ट्रः — वंशीधर, पुनरवधारय वत्सदुर्वाससोर्वृत्तान्तम् ।

कञ्चुकी — तथा । ( इति निष्क्रान्तः )

शकुनिः — ( आत्मगतम् )

स दानवानुद्रवणेन जिष्णुर्भीमः कपीन्द्रेण हिमाद्रिशृङ्गे ।
दुर्वाससा चेदपि धर्मसूनुः स्याद्राजसूयस्य निरन्तरायः ॥

( ततः प्रविश्य सहर्षसंभ्रमम् )

दुर्योधनः — प्रसन्नो महर्षिर्वरमभीष्टं मां वरयते । तन्मे ब्रूहि किमभीष्टमद्य वृणोमीति ।

शकुनिः — राजन् एवमिव । ( इति कर्णे कथयति । )

दुर्योधनः — अहो श्रेष्ठोदर्ककुशलता मातुलस्य । वृणोमि तावत् ।

धृतराष्ट्रः — वत्स, मुनिवन्दनाय मामपि नेतुमर्हसि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दुर्योधनः** — एत्वेतु तातः। (इति निष्क्रान्तः, सञ्जयेन दत्तावलम्बो धृतराष्ट्रश्च।)

**शकुनिः** — हन्त, धिङ्मे प्रमादम्। पाण्डवेभ्यस्तस्याक्षयपात्रस्याहरणमपि दुर्वाससैवापादनीयमिति खल्वध्यवसितम्। तेन ह्याशु प्रबोधयामि (इति परिक्रम्य) अथवा पाञ्चाल्या एव खलु तत्प्रसादयति प्रार्थितमभ्यवहारम्, नेतरस्याः। अपि च न प्रकाशयितव्यो मुनेः पाण्डवेष्वहितोऽस्मदभिसन्धिः। न नः कार्यमक्षयपात्रेण। (इति निवृत्य)

ध्वंसन्ते पाण्डवा नूनमनाराध्य महामुनिम्।
आराधयन्तो नैष्यन्ति राजसूयाभ्यसूयया॥ १७॥

इत्युभयथाऽप्यस्माकमिष्टापत्तिः। (उपविश्य) अथ यदि निर्वृत्तराजसूयानस्मान् ते चापि दुर्वासःपूजामहाग्राहह्रदोत्तीर्णा अमर्षाद्योधयिष्यन्ति — अथवा विप्रकृष्टतमां भविष्यत्संभावनामेनां किमर्थमद्योपलालयामि।

रूढमूलो भवेद्राजा सामन्तेषु प्रजासु च।
प्रभावाद्राजसूयस्य जीयाद्वा शत्रुमुत्थितम्॥ १८॥

तथाऽपि नूनं यदि पाण्डवानामस्यैव द्वादशाब्दस्यान्तरे कथाशेषता समापाद्यते तदा शक्यमस्माभिर्विशदान्तरङ्गैर्भवितुम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कोपो दुर्वाससः केन ज्वलेत्पाण्डवकानने ।
अन्यः को वा प्रकारः स्यात् तेषां व्यसनमीहितुम् ॥

( प्रविश्य )

**प्रतीहारकः** — गान्धारराज, प्रतीहारस्थः कोऽपि विप्रः प्रवेशमनुमानयति ।

**शकुनिः** — प्रविशतु तावत् ।

**प्रतीहारकः** — तेन हि प्रवेशयामि । ( इति निष्क्रान्तः । )
'कोपो दुर्वाससः केन' ( इत्यादि पुनः पठन् सचिन्तस्तिष्ठति । )

(प्रविश्य विप्रवेषप्रतिच्छन्नः)

**जटासुरः** — विजयन्तां कुरुराजस्य प्रियचिकीर्षवः ।

**शकुनिः** — भोः विप्रवर, समीचीनेयमाशीः । आस्यताम् । आदिशतु भवान् मामभीष्टसंपादनाय ।

**जटासुरः** — गान्धारराज,

अभ्यापन्नश्शत्रुभावमेको यद्युभयोस्समम् ।
तयोर्यः प्राप्तकालः स्यात्तं मे ब्रूहि नयोद्यमम् ॥ २० ॥

**शकुनिः** — सन्धिः ।

**जटासुरः** — प्रथमः कल्पः । तेन हि सन्धिं प्रशंसति भवान्पातालनिवासिभिर्ब्राह्मणैः सह ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकुनिः — भोः महाब्राह्मण, के ते पातालनिवासिनो ब्राह्मणाः ?

जटासुरः — अस्मादृशाः ।

शकुनिः — न खल्ववगच्छामि । अथवा दानवप्रणिधिर्भवान् ।

जटासुरः — (स्वरूपमाविष्कुर्वन्) राजमातुल,

कंसस्सानुचरस्सचेदिनृपतिस्साल्वो जरासन्ध इ-
त्येते दानवपुङ्गवाः स्मृतिपथं नीता विपक्षैर्हि यैः ।
तेषामद्य किरीटमण्डनमणिस्तन्नः किरीटी व्यधा-
त्सुत्राम्णः प्रियकाम्यया यदभयं न प्राप्नुमः कुत्रचित् ॥

मूकासुरस्यात्मसमस्सखाऽहं तस्मिन्हते संयति फाल्गुनेन ।
दग्धेऽपि संशप्तकसैन्यकक्षे दैत्यैर्भयार्तैः प्रहितोऽस्मि दूतः ॥

शकुनिः — सखे, स्वागतं ते । प्रार्थनीयं वस्सख्यं स्वय-मुपस्थितम् । कथं संशप्तकानप्याजघान पार्थः ।

जटासुरः — बाढम् ।

लोकपालास्तमाविश्य शक्त्या स्वस्वांशभूतया ।
दानवोच्छेदमात्तस्य चिन्तयन्ति हि निर्हृतिम् ॥ २३ ॥

शकुनिः — तत्कीदृशः प्रतीकारोऽद्य संमतो दानवेन्द्राणाम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जटासुरः — यथा देवाः पृथासूनूंस्तथा दैत्याश्च कौरवान् ।
सकृपद्रोणगाङ्गेयानावेष्टुमभिमन्वते ॥ २४ ॥

प्रारभन्ते च हरगौरीप्रसादफलकं महत् तन्त्रम् । येन यथाविधि निर्वर्तितेन कुरुराजस्य वर्ष्म वज्रकल्पं भविष्यति ।

अभेद्यकवचः कर्णः वज्रकल्पस्सुयोधनः ।
निष्कृपाः कृपमुख्यास्ते पार्थाः कुर्वन्तु किं रणे ॥ २५ ॥

शकुनिः — अवितथमेतत् । किन्तु युद्धाशंसयैव हि वो मन्त्रः प्रवर्तते । यावदनुत्तीर्णसमयाः कौन्तेयाः तावदेव तेषामपायो यद्यापाद्यते तदा शोभनतरं ननु स्यात् । न च दुष्करमधुना प्रतिभाति मे पाण्डवनिर्मथनं त्वत्सहायसामर्थ्यजुषः ।

जटासुरः — कथमिव ?

शकुनिः — न जानीतः प्रायेणेमं फाल्गुनवृत्तान्तमेतावता द्रौपदीयुधिष्ठिरौ । त्वं च विश्वसनीयमुनिवेषग्रहणकुशलः ।

जटासुरः — अवगच्छामि खलु प्रयोगसर्वस्वम् ।

शकुनिः — एष च दुर्वासा भिक्षितुमुपावर्तिष्यते पाण्डवाश्रमम् । स हि प्रकृतिकुटिलः श्रद्धालून्पाण्डवान् स्वेनैवातिथ्यग्रहणविधावायासयिष्यति । तस्य च सन्दर्भविशेषेषु कोपानलसन्धुक्षणोपायं यदि द्रक्ष्यसि —

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जटासुरः** — अवधृतं करणीयम् । अद्य स्वामिपादानामनृणो भवितुं पारयिष्यामि । एषोऽस्मि मुनीश्वरस्संवृत्तः । अनन्तरं च किञ्चिदन्तरमुपलभ्य दुर्वाससः पार्श्ववर्ती भविष्यामि ।

**शकुनिः** — तत्साधय पुनर्दर्शनाय ।

**जटासुरः** — बाढम् । अतिदैत्याचार्यं वो मन्त्रदर्शनम् । ऋद्धिर्भवत्वस्माकं पक्षस्य ।

आसुरी ह्युभयी जातिर्भुवि वा दिवि वा स्थिता ।
वयं साक्षाद्दितेर्वंशे यूयमस्मत्सधर्मिणः ॥ २६ ॥

**शकुनिः** — अविघ्नस्ते भूयात् ।

**जटासुरः** — साधयामि तावत् (इति प्रणम्य निष्क्रान्तः ।)

**शकुनिः** — अहो अद्य सुदिवसः ।

(नेपथ्ये कलकलः)

हा धिक्, किं परिक्रुध्यति मुनिः । कष्टं भोः । विपन्नं कार्यम् । (इति परिक्रम्य विमृश्य च) अहो मूढः खल्वहम् । एषा सदुन्दुभिध्वाना विजयावलिः पठ्यते कुरुराजस्य । तत्किं प्रत्यावृत्तः कर्णः ?

(प्रविश्य)

**प्रतीहारकः** — गान्धारराज, विजयसे कल्याणपरम्परयाऽस्य राजकुलस्य । पक्षत्रयावधि पाण्डवाश्रमे आतिथ्यदोहदेनाव-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्थानं प्रतिश्रुत्यान्तर्हितस्सपरिवारो दुर्वासाः । विजययात्रातः प्रत्यावृत्तस्सामन्तगणोपासितोपान्तोऽयमप्यङ्गराजः । तेन हि प्रतिपालयति भवन्तमन्तःपुरे विराजमानो महाराजः ।

**शकुनिः** — वातायन, कच्चिदप्रत्यूहेन निष्ठितं कन्याभिवरणमङ्गराजेन ।

**प्रतीहारकः** — सर्वमनवद्यम् । यावन्नोपावृत्तः कृष्णस्तावदेक निष्ठितो विवाहोपोद्घातः कर्णेन बलभद्रस्य सविधे ।

**शकुनिः** — वातायन, तेन ह्यन्तःपुरमार्गमादेशय ।

**प्रतीहारकः** — इत इतो राजमातुलः ।

( उभौ निष्क्रान्तौ )

इति चतुर्थोऽङ्कः ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ पंचमोऽङ्कः ॥

( ततः प्रविशतस्सहदेवसुदर्शनौ )

सहदेवः— प्रायः परस्परमिदं भुवने हि दृष्ट-
मेकान्वयप्रभवतैव विरोधमूलम् ।
अब्जे हि तुल्यमुपमानविधावुपात्त
श्रीमन्मुखस्य न तयोः परमस्ति मैत्री ॥ १ ॥

एवं च जीवति पितामहे भीष्मे सान्त्ववचनपरे परिक्लिश्यति भगवति व्यासे दृप्तासुरनिग्रहैकबद्धकक्षे निरीक्षमाण एव माधवे दुष्परिहरमिदं प्रत्यहं विवर्धते कुरुकुलच्छिद्रम् ।

सुदर्शनः — कुमार, न मां प्रत्येषा मध्यस्थवादिता रोचते । न चाब्जयोरत्रोपमानत्वेनादानम् । उभे अप्यब्जे स्पृहणीयगुणे खलु भवतः । तदेष मे परिष्कृतः पाठः ।

प्रायो विरुद्धगुणयोर्भुवने प्रसज्ज-
त्येकान्वयप्रभवता हि निसर्गशत्र्वोः ।
चन्द्रो हि तुल्यमुदियाय पयोधिगर्भा-
द्धालाहलेन जगदार्तिकृता मनोज्ञः ॥ २ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तेन हि ममायमन्यापदेशो भवदग्रजमन्तरेण ।

सरसि न भवदन्यो राजहंसोऽस्ति मान्य-
स्तव न सदृशमेवं क्लिष्टधर्मस्त्वनौष्ण्यम् ।
खलमतिरयमल्पः पश्य दर्पाद्बकोट-
स्त्वयि भवति नृपीयन् बाधते मीनलोकम् ॥ ३ ॥

**सहदेवः** — भवांस्त्वन्यापदेशेनाह । प्रत्यहं निरपदेशं पाञ्चाली तुदत्यार्यम् । कष्टः खलु धर्मपक्षपातिनां विविधसंबाधबाधितः प्रकृत्यनुरोधः । सखे, अम्बा खलु वेद याथातथ्येन मानसीं रुजमार्यस्य । प्रीयते मे हृदयं तत्रभवत्या आर्यमन्तरेण कुशलानुयोगधोरणीमनुसन्धातुम् । वयस्य, तद्गुण अम्बाया वचनानि पुनरपि ।

**सुदर्शनः** — आह किल पृथादेवी ।

विक्रान्ताननुजान् निभाल्य बलिनो दान्तान्निजापेक्षया
पश्यन्नप्यतिदारुणे पथि दृढोत्साहान् रिपून्दीव्यतः ।
को धर्मः कथमानृशंस्यमिह किं क्षत्रस्य कालोचितं
नातः पातकमस्ति वेत्यशरणश्चिन्ताभिरास्ते कथम् ॥

**सहदेवः** — नूनमीदृशमेवार्यस्य हृदयदौरवस्थ्यम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सञ्चिन्तयन्ननुजविक्रमसारमार्यः
पश्यंश्च दीनदशया परिधूसरांस्तान् ।
स्वं निन्दति प्रलपति श्वसिति प्रकामं
निर्विद्यते प्रशममेव पुनः प्रयाति ॥ ५ ॥

अहो सत्त्वमार्यस्य ।

शल्यं शत्रुनिखातमन्तरधिकैरातङ्कदैर्दुर्नयैः
प्रत्यक्षं च दशा कृशा सहभुवां भोगोचितानामियम् ।
वाचो मन्युकिरोऽविषह्यविषमव्यासङ्गसन्धुक्षिताः
कृष्णायाश्च निरन्तरं न तु मनागार्यो भिनत्ति क्षमाम् ॥

सुदर्शनः — ननु कुमारो वस्तुनः पाञ्चाल्या मन्यूद्दीपनार्हाणि दुर्बान्धवानामनार्यकृत्यान्यनुदाहृत्य तस्याः पारुष्यमेव प्रकाशयितुमर्हति ।

राज्यभ्रंशमलम्भयच्छलमधिष्ठायातिहीनं वचः
प्रोचे संसदि वाससा नृपवधूं पस्पर्श कर्षन् हठात् ।
धर्मापेक्षितया प्रपद्य विपिनं क्षाम्यत्यजातद्विषि
द्रोही नन्दति राजसूयमभयो द्रागाजिहीर्षत्यपि ॥ ७ ॥

समयेनाययावार्यो यदा द्यूतजितो वनम् ।
सम्राड्विरुद्ध एवासीत्तदा किमपहास्तितः ॥ ८ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उच्छृङ्खलस्यैनां प्रधर्षणां न मर्षयति वीरगोष्ठीषु निजाख्यां बहुमन्यमानः । न चाद्य भीमार्जुनौ सन्निहिताविति दैवेनास्मास्वेकान्तपराङ्मुखता प्रदर्शिता । किमेको नकुलः करोतु । किमबला पाञ्चाली वा कुरुताम् ।

ज्येष्ठोऽसौ विप्रधर्मेण क्षमामेकां प्रशंसति ।
कनिष्ठस्समदर्शी त्वं कृतात्मा निरुपप्लवः ॥ ९ ॥

दत्ता वो गलहस्तिका परिभवो दाराभिमर्शः कृतः
पादोऽयं समुदञ्चितश्शिरसि वो धातुं क्रतुप्रेप्सुभिः ।
भूयः क्षाम्यत दाम्यत श्रयत भो दैवं निमील्याक्षिणी
स्थाने ह्युत्सहते स वः प्रहसितुं निर्गत्य सस्त्रीजनः ॥ १० ॥

सहदेवः — (सस्मितम्) उपहसतु कामम् । परितुष्टश्च यातु ।

सुदर्शनः — नैवमालपिष्यति नकुलः ।

सहदेवः — वयस्य, प्रियं ते निवेदयामि । एवं किल यज्ञाङ्गभूतानां गवां प्रत्यवेक्षणव्याजेनास्मत्परिसरपरिवर्तिनं सपरिच्छदं कुरुराजं निशम्य अविषह्यामर्षविषानलज्वालाकवलितान्तःकरणो नकुलः कथञ्चिदप्यार्यं भीमसेनमन्विष्यानेतुमध्यवस्य प्रत्यूष एव निर्गतः । अचिरात्किल स्वर्लोकाल्लोमशोऽस्मानुपस्थितः आर्यस्य फाल्गुनस्य असुरानीकानुद्रवणवृत्तान्तमावेद्य नारदमुखादधिगतमित्यार्यभीमसेनस्यापि वृत्तान्तमित्थमाचख्यौ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आञ्जनेयस्तु कौन्तेयं मारुतिर्मारुतिं चिरात् ।
अन्वगृह्णात्परिश्रान्तं सरस्तच्चाप्यदर्शयत् ॥ ११ ॥

इति । तेन ह्यस्मिन्नन्तरे प्रायेणावचितसौगन्धिकः प्रत्यावृत्तिपथमवतीर्ण आर्य इति तर्कयामि । तदर्धमार्ग एवासादयिष्यत्यार्यं नकुलः ।

**सुदर्शनः** — आसादयत्वानयतु च शीघ्रम् । अन्यथा को जानातु कीदृशमेते दुर्हृदयाः कौरवपाशाः परिभवानुबन्धमस्मासु चिन्तयिष्यन्तीति ।

**सहदेवः** — वयस्य, कथंकारमदान्तास्ते दुर्वाससि साध्वाचरन् ।

**सुदर्शनः** — अध्यवसायबलेन । न तु नाम ते दैवैकशरणाः परितप्यन्ते भारनिर्वाहे प्राप्ते ।

**सहदेवः** — क्रूरः खल्वधिक्षेपः ।

**सुदर्शनः** — न खलु न खलु । अवितथमेतन्मया मन्त्रितं ज्ञास्यसि यदि स एव दुर्वासा अस्मानुपतिष्ठेत ।

( नेपथ्ये )

अयमहं भोः ।

**सहदेवः** — कथमिदानीमतिथीनामिव निवेदनम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सुदर्शनः** — न कोऽप्यन्यः । स एष दुर्वासाः प्राप्तः । अवेलेयं वर्तते । सहदेव, कदाचिदाश्रमपदेऽसन्निहिता पाञ्चाली । अथवा शून्यहृदयेन न शृणोति । आर्ययुधिष्ठिरश्चानुष्ठान-परस्सरस्वतीतीरे भविष्यति । कोपनः खलु मुनिः ।

( नेपथ्ये )

अयमहं भोः ।

**सहदेवः** — तदेनं प्रतिगृह्णामि । सुदर्शन, सत्यवचनः खल्वसि । दैवमेवाद्यास्माकमवलम्बः ।

**सुदर्शनः** — त्वरस्व, त्वरस्व ।

( निष्क्रान्तः सहदेवः )

नालमुपालब्धुं शक्ष्याम्येवमाविष्कृतदुरध्यवसायं दैवम् । स-शिष्यमण्डलस्य दुर्वाससः कथमद्य भिक्षादोहदः पूरणीयः स्यात् । अनस्तंगत एव खलु सूर्ये स्वं महिमानं प्रतिपद्यतेऽक्षयपात्रम् । इयं च दिनात्ययवेला । ( दृष्ट्वा )

हन्त प्रतीचीशैलोरुनितम्बे लम्बते रविः ।
तत्पयोधरपत्रालीरचनारञ्जितैः करैः ॥ १२ ॥

अपि च,

ये निस्सृता बलिभुजोऽहनि चारवृत्त्या
सन्ध्यान्तरे गतिमवेक्ष्य तमोध्वजिन्याः ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साङ्केतिकानि विरुतान्यधुना त एते
हर्तुं दिनेशवसुसंपदमीरयन्ति ॥ १३ ॥

तथा हि,

निकुञ्जेभ्यो नीडद्रुमवलयमध्यान्नगदरी-
गुहाभ्यस्सम्भूय द्युमणिमहसामार्तिजनकः ।
समन्तात्सन्ध्यायां प्रचलितमहामौकलिकुल-
प्रतीकाशस्सान्द्रीभवति तमसामेष निचयः ॥ १४ ॥

किं चिरयति वयस्यः । अथवा भिक्षोपनिमन्त्रणेनानुनीयानुष्ठानविधेर्विसृज्य मुनिं, पाञ्चालीं प्रतिबोधयितुम आश्रमं प्रविष्टो वयस्य इति तर्कयामि । अनुवर्ते तावद्वयस्यम् ।

(इति निष्क्रान्तः)

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति विप्रवेषो जटासुरः किञ्चिदन्तरे आह्निकपरो युधिष्ठिरश्च ।)

**जटासुरः** — एष सरस्वतीतीरे नियममातिष्ठति युधिष्ठिरः । तदत्रैव प्रतिपालयामि तस्याश्रमं प्रति निवर्तनम् ।

(इति ध्यानमास्थितः ।)

**युधिष्ठिरः** — निर्वर्तितस्सायन्तनो ममायमनुष्ठानकलापः । (प्राचीमुद्वीक्ष्य) चिरं खलु स्थितोऽस्मि । यदद्य,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रालेयरोचिषि शनैरुदयाद्रिशृङ्ग-
मारोहति प्रथितकैरवपक्षपाते ।
उन्मूलितश्रि परिभूतमुपात्तमोह-
मुद्भ्रान्तषट्पदमधायि सरोजषण्डम् ॥ १ ॥

एकाकिनी चाश्रमपदे पाञ्चाली । न च न शङ्कनीयान्यतर्कितसंभवान्यत्याहितान्येवं दुर्गत्यन्धकूपे निमग्नात्मनामस्मद्विधानां पदे पदे । (इत्युत्थाय) नमस्ते सरस्वति !

मातस्तरङ्गविच्छेदस्फूर्जच्चन्द्रांशुहासिनि ।
जाह्नवीप्रणयाश्लेषप्रतीक्षाद्रुतवाहिनि ॥ २ ॥

आपृच्छे भगवतीम् । (इति परिक्रामन्)

अस्मिन्नेव निशामुखे सहभुवौ भीमार्जुनौ दूरगौ
तौ मे प्राणसमाहितौ क्व भवतो जाने न वा कीदृशौ ।
वत्सौ हि प्रियसाहसावतिमहान् भारस्तयोराहितः
प्रायो दैवमदक्षिणं मयि मनः पर्येति दुःसूचनाम् ॥ ३ ॥

(दृष्ट्वा) अये कोऽप्येष तपस्वी । तदनर्हमनभिवाद्य गन्तुम् । (उपसृत्य) नमो भगवते ।

जटासुरः — (चक्षुषी उन्मील्य) स्वस्त्यस्तु ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**युधिष्ठिरः** — अपूर्वदर्शनतया भगवतः किमपि देशनामादिकं ज्ञातुमुत्कण्ठते मे चेतः ।

**जटासुरः** — बाढम् । अद्यैवामुं प्रदेशमुपागताः स्मः । विरक्ता वयम् । किमस्मद्देशसमाख्यादिभिर्ज्ञातैः । निःस्वताधनाः खलु निवृत्तमायाः परप्रकाशे वस्तुनि सन्निविष्टाः । तेन हि ;

स्वग्रामः स्वगृहं स्वकश्च विभवः स्वीयास्तथा बान्धवाः
दुःखं वा सुखमेव वा किमखिलं हित्वा धियो विभ्रमम् ।
सारं तद्द्वयमेव जन्मनि गुरोः क्लेशापहं दर्शनं
स्वच्छन्दा गिरिकन्दरेषु वसतिस्सा चाभितो निर्ममा ॥ ४ ॥

**युधिष्ठिरः** — भगवन्, अविरक्तस्यापि मे महदेतद्भाग्यं परिपतितम् । यज्जन्मनि सारभूतं तत्क्लेशापहं भगवतो दर्शनमद्य दिष्ट्या समजीघटत् । किन्तु न स्वच्छन्देन निवसाम्यस्मिन्विपिनोदरे । न चापि निर्ममा बुद्धिरभितो मम नित्यं गतं स्थितमनुपस्थितं च शोचतः ।

**जटासुरः** — तेन हि निबोधैतं ममताग्रन्थिविभेदनमाप्तोपदेशम् ।

**युधिष्ठिरः** — अवहितोऽस्मि ।

**जटासुरः** —

अर्थान्बन्धुरनुद्रुतस्तरुणिमव्यासङ्गिनी कामिनी
योगक्षेमधुरन्धरे त्वयि मनाग्रज्यन्ति पुत्रादयः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अव्यग्रे त्वयि विद्रवन्ति विभवा गृध्नुस्समस्तो जनः
काय नश्वरमापतन्ति विपदः का निर्वृतिस्संसृतौ ॥

युधिष्ठिरः — (सनिश्वासम्) भगवन्, क्षत्रियोऽहं अकृती स्वधर्म-निर्वाहे। कुतो मे वैराग्योपपत्तिस्संसारे। तन्मन्दाधिकारिणोऽनुरूपं शास्तु भगवान्।

जटासुरः — अथ को भवान्।

युधिष्ठिरः —

पाण्डवोऽहं धर्मसूनुर्धार्तराष्ट्रविवासितः।
वियुक्तो दूरवर्तिभ्यां भ्रातृभ्यामस्मि दुःखभाक् ॥ ६ ॥

जटासुरः — हा धिक् कष्टम्। किं भवान् युधिष्ठिरः।

युधिष्ठिरः — भगवन् स एवाहमस्मि मन्दभाग्यः।

राज्यं येन दुरोदरे परिहृतं सन्धाभिरायासिता
येन भ्रातृचतुष्टयी कुलवधूः क्षिप्ता च येनापदि।
येनात्मा परिभावितो मखवरेणोन्नीतमानोऽप्यसौ
ब्रह्मन्नाश्रितनाशनो निरवधिक्लेशोऽस्म्यहं पातकी ॥

जटासुरः — अभिविश्रुतः खलु भवानमलीमसैरनघैर्निजगुणगणैः।

स्थाने निदानं स्वमवैषि साधो दैवेरितानां विपदागमानाम्।
कृच्छ्रे स्वदोषान्गणयन्ति सन्तः सुखागमेऽन्येषु गुणान्गृणन्ति ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धर्मसूनो,

युधिष्ठिरः — भगवन्, किमाज्ञापयसि ।

जटासुरः — कष्टः खलु निवृत्तव्यापाराणां मादृशां लोकवार्ता-व्यासङ्गो नाम ।

युधिष्ठिरः — कथमिव ।

जटासुरः — महत्सु धर्मसङ्कटेषु गतिदर्शने भवान्प्रमाणीक्रियते विबुधैरपि । तन्मामिहानुशासितुमर्हसि ।

जानन्ननिष्टमत्युग्रमिष्टस्यापतितं जनः ।
संवृणोतु किमाख्यातु सूनृतं किं न हन्यते ॥ ९ ॥

युधिष्ठिरः — स्वैरमाख्यातु भगवान् । किमत्र धर्माधर्मविचारेण । न विदीर्येत खलु घोरतमैरप्यनिष्टनिर्घातैर्यौधिष्ठिरं चेतः ।

जटासुरः — ममाधन्यतया, हन्त, समाराधितदुर्वाससं दुर्योधनं द्रष्टुं हास्तिनं गतोऽभवम् ।

युधिष्ठिरः — ततस्ततः ।

जटासुरः — विद्यते खलु पिशुनस्स वैणिको मुनिहतकः ।

युधिष्ठिरः — भगवान्नारदः ।

जटासुरः — अथ किम् ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स देवलोकात्संप्राप्तो युष्मद्धृतिनिशातनम् ।
धार्तराष्ट्रप्रियाख्यानं कमप्यर्थमवासृजत् ॥ १० ॥

युधिष्ठिरः — अलमलं भोः । किमतः परं श्रुतेन । वत्सस्य मे फाल्गुनस्य खल्वत्याहितमुपक्षिपसि । हन्त भोः परिमुषितोऽस्मि ।

जटासुरः — धर्मसूनो, अलं शोकावेगेन ।

युधिष्ठिरः — भगवन्, ब्रूहि किमापतितं मे वत्सस्य । एष स्थिरीकृतो वज्रकठिनो युधिष्ठिरस्यात्मा वत्सस्यात्याहितं श्रोतुम् । अथवा तिष्ठतु विवरणं नाम । अयि भोः पाकशासन, धिक् त्वां नृशंसम् । अथवा प्रभवतां खलु पुत्रप्रणयादपि गरीयसी राज्यतन्त्रचिन्ता ।

वत्सं प्रकल्प्य मघवन्नसुराशुगाना-
माशीविषोग्रमहसामुपहारमारात् ।
निश्चिन्तमेव विनिवर्तितुमीशिषे त्वं
दुःखी तदेकशरणः कथमद्य वर्ते ॥ ११ ॥

जटासुरः — धर्मनन्दन, किमस्थाने शोकसंवेगस्यावसरं ददासि । विजयी किल प्रतिन्यवर्तत असुरानीकसंमर्दाद्विजयः ।

युधिष्ठिरः — तेन हि जीवति मे वत्सः ।

जटासुरः — शृणोतु भवानपरितापेन । स्थिरीक्रियतामात्मा ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युधि क्षपितदानवो मघवता निजार्धासने
प्रगायदमरीकुलैः परिगते प्रतिष्ठापितः ।
महोत्सवनिरन्तरे द्युचरमण्डले फाल्गुनो
व्यराजत सुरस्रजा किल पिनद्धया वक्षसि ॥ १२ ॥

मौली आज्ञा

**युधिष्ठिरः** — भगवन्, किं धूमस्तोमपरीताया माक्षिकाया मधुबिन्द्वास्वादसन्तर्पणेन । अतिपतितमावेदयतु भगवान् कीदृशमद्य पाण्डवरत्नमिति ।

**जटासुरः** — ततश्च महता बहुमानेन कानिचिद्दिनानि स्वर्लोक एव वस्तुमभ्यर्थितः पाकशासनेन अविरलमप्सरोनृत्तगीतादिभिरात्मानं विनोदयन्नुवास पार्थः ।

**युधिष्ठिरः** — क्रूरः खलु भगवतोऽध्यवसायः । य एवमुपक्षिप्यानिष्ठमुदन्तम् अभ्यन्तरकथां विलम्बेन वर्णयसि । ब्रूहि ब्रह्मन्, किमासीदन्ततो मे प्रियानुजस्य । यद्यसावसुरानीकमपि जिगाय, कुतोऽन्यतस्तस्य विषादागमः ?

**जटासुरः** — धिङ्मामसूनृतवादिनम् । धिङ्मे भागधेयं यस्येदृशमनिष्टं भवदग्रत एव आवेदनीयं वर्तते । तदिदमविस्तरेण ।

क्वचिदेकान्तसंविष्टां चकमे फाल्गुनश्शचीम् ।
अपसर्पेति निर्धूतस्सर्पीभूयापतद्दिवः ॥ १३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युधिष्ठिरः — किमाह भवान् । नैतत्फाल्गुने संभाव्यते ।

वशी किल मम भ्राता किं व्यतिक्रममीदृशम् ।
इच्छेत्तपोभिरत्युग्रैराराधितमहेश्वरः ॥ १४ ॥

जटासुरः — यदि मिथ्यैव स्यादेष शापवृत्तान्तस्तर्हि प्रियं मे । किन्तु नैतदसंभाव्यमिति मे प्रतिभाति ।

कामिनीकमनीयेन रूपेण विजयो जयी ।
तपःक्लेशैस्समुद्विग्नो युद्धक्षोभैर्मदोद्धतः ॥ १५ ॥
भोगैकविषये दीव्यन्नुत्सवैः प्रतिनन्दितः ।
अप्सरस्सङ्कुले नाके किमियान्न मनोभवम् ॥ १६ ॥

अपि च वदतो नारदस्य मुखात्समक्षमेव मयाऽधिगद एष वृत्तान्तः ।

युधिष्ठिरः — भगवन्, यद्येवं कुत्राधुना किंप्रवृत्तिर्वा वत्सः ।

( प्रविश्य )

भिल्लाः — परित्रायतां परित्रायतां महाराजः ।

युधिष्ठिरः — हन्त भोः, कः परित्रातव्यः ।

भिल्लाः — महाराज, आर्यभीमसेनः ।

युधिष्ठिरः — कस्मात्?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भिल्लाः** — महाऽजगरात् ।

**युधिष्ठिरः** — किमिदं हास्यमभिधीयते । अपसरत मूढाः अपसरत । किं मे फाल्गुनं प्रति संप्रत्येव सातङ्कं चेतः पुनः पीडयथ मिथ्याभीमपरिक्लेशमुद्भावयन्तः ।

बलं नागसहस्रस्य यो धारयति मारुतिः ।
न तं पराभविष्यन्ति शतमेव सरीसृपाः ॥ १७ ॥

**भिल्लाः** — महाराज इदमस्मत्प्रत्यक्षदृष्टम् ।

आवेष्टितो ह्यजगरेण स मन्दराद्रि-
र्मन्थे पुरा वपुषि वासुकिनेव भीमः ।
किञ्चिद्व्यचेष्टत विमोचयितुं स्वमङ्गा
मुह्यन्नभूत्करिकरेक्षुकलापकल्पः ॥ १८ ॥

दिष्ट्या तदन्तरे उपान्तवर्ती भर्ता नकुलो निशाम्य क्लेशमार्यस्य समयेन तमजगरं प्रतिबध्य निरुन्धन् व्यसृजदस्मान्भवन्तमाह्वातुम् ।

स व्याहरति भोगीन्द्रो मानुष्यैर्वाग्विजृम्भितैः ।
मत्प्रश्नजालोत्तीर्णाय प्रसीदामीति निश्चयम् ॥ १९ ॥

**जटासुरः** — धर्मसूनो, नूनं स एव ते सोदरः फाल्गुनश्शापमहिम्ना सर्पीभूय परिभवति विगलितस्मृतिर्भीमसेनम् । अन्यथा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

को हि नाम प्राकृतस्सरीसृपः पराक्रमेत मारुतौ । कष्टं खल्विदं संवृत्तम् ।

**युधिष्ठिरः** — अहो वज्रनिर्घातः । पाण्डवकन्दनिर्मूलनाय नूनं दुरूहमन्त्रनिष्णातेन हतविधिना भवितव्यम् ।

पाण्डवः पाण्डवं हन्ति मध्यमः स्वस्य पूर्वजम् ।
अकृष्टपच्याश्शत्रूणां कृषयोऽस्माकमूषराः ॥ २० ॥

यः खाण्डवं दहनसादकरोद्व्यपोह्य
वृष्टिं सुरेन्द्रविहितां शरकायमानैः ।
यस्तोषितत्रिनयनो विबुधैर्निजास्त्र-
निक्षेपभूमिरयमाक्रियतानुजो मे ॥ २१ ॥

स कथं शापसंमूढो भवन्नजगरो वने ।
भीममेव समासाद्य कुलनाशाय चेष्टते ॥ २२ ॥

भगवन् कात्र मे गतिः । किमस्ति किमपि शापस्यावसानं परिकल्पितम् ।

**जटासुरः** — न तद्विवृतं नारदेन । अथवा तिष्ठ क्षणमात्रम् । प्रणिधानेन पश्यामि । ( ध्यानमभिनीय ) हन्त वर्धसे । अर्जुनपक्षपातिना किल शतमन्युना अवपात्य दुष्कृतं तदमर्षणीयमपि त्वत्संभाषणावधिर्विहितः शापः । तद्गच्छ शीघ्रमनुजयोः परित्राणाय ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धर्मपुत्रः** — भगवन्ननुगृहीतोऽस्मि ( इति प्रणम्योत्तिष्ठति )

**भिल्लाः** — इत इतो महाराजः ।

**धर्मपुत्रः** —

आतिथेयीं सपर्यां ते भ्रातृभ्यामेव सङ्गतः ।
निवर्तिष्येऽद्य निर्वोढुमचिरादिति मे मतिः ॥ २३ ॥

अस्मिन्नन्तरे च मा नाम पाञ्चाली वृत्तान्तजातमेनमधिगच्छतु ।

**जटासुरः** — न प्रकाशयिष्यामि तस्याः । स्वस्ति ते भूयात् ।

( निष्क्रान्तो भिल्लैस्सह युधिष्ठिरः )

**जटासुरः** — अहो सुभगेयं रात्रिः । अहो दैवानुकूल्यं सासुराणां धार्तराष्ट्राणाम् । सुललितस्य मत्प्रयोगस्यायमजगरवृत्तान्तो महानुपबृंहणो जातः ।

ग्रस्ते स्यात्किमजगरेण जीविताशा
निर्भीमे जगति युधिष्ठिरो न तिष्ठेत् ।
जिष्णुर्वा द्रुपदसुताऽथवा यमौ वा
सोढुं तद्द्वयविरहं न च क्षमेरन् ॥ २४ ॥

इत्थमक्लेशेन खलु निर्हृतो निरुपमशौर्यराशिश्शत्रुपक्षः । अहो सर्वत्र विश्वसनीयता ब्राह्मणवेषपरिग्रहस्य । तदधुना

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्रौपदीमवगतार्थां करिष्यामि । निवारितः खल्वस्मि ऋजुबुद्धिना धर्मसूनुर्ना—नोद्वेजयितव्या पाञ्चालीति । अथवा प्रथमं मे मित्रमण्डलं द्रक्ष्यामि । कुत्र नु खलु तिष्ठन्ति । (इति परिक्रामति)

(प्रविश्य)

**भटः** — अपसरत्वपसरत्वार्यः ।

**जटासुरः** — भद्र, कुतः ?

**भटः** —

कुरूद्वहोऽयं समुपैति राजा क्रीडारसाद्बन्धुसुहृत्समेतः ।
सरस्वतीतीरममुं समृद्धैः परिच्छदैस्सानुचरावरोधैः ॥

**जटासुरः** — अये अत्युद्धतमुपक्रान्तम् । तपस्विजनानां स्वभूमिरियम् । नात्र नरपतिरुत्सारणां कर्तुमर्हति । तन्नापसरिष्यामि । आगच्छतु ते स्वामी । (इत्युपविश्य तपश्चरणं नाटयति ।)

**भटः** — भगवन्, न युक्तं भवादृशानां हठमीदृशमाचरितुम् । सान्तःपुरस्त्रीजन उपावर्तते महाराजः । जानाति भगवानुग्रशासनं महाराजम् ।

**जटासुरः** — अरे मूर्ख, किं मे विभीषिकां निरूपयसि । न जानीषे तपस्विजनानां वाचि सन्निहितं दुर्विनीतानां निग्रहमहाशनिम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भटः** — प्रसीदतु महातपस्वी । एषा महाराजस्यैव प्रार्थना नाम भवतु । अनुकम्पतां मां च भगवान् । इतो भगवतः कोपः । ततो महाराजस्योग्रो दण्डः । सर्वथा शरणागतोऽस्मि । (इति प्रणिपतति)

(प्रविश्य)

**दुःशासनः** — अरे भीमक, कीदृशी ते स्वनियोगव्यग्रता ।

**भटः** — नमः स्वामिपादेभ्यः । एष तपस्वी सान्त्व्यमानो नापसरति ।

**दुश्शासनः** — तेन हि चतुर्थोपायस्समादीयताम् ।

**जटासुरः** — को हि नाम भवान् तपस्विजने दण्डप्रयोगमनुमन्यते ।

**दुश्शासनः** — भीमक, निष्कास्यतां गलहस्तिकयाऽयं दुष्टतापसः ।

**भटः** — एवं खल्वादिशति भर्ता ।

**दुश्शासनः** — अथवा तिष्ठ । अरे रे मुनिपाश, नापसरिष्यसि किल । तेन हि ।

तं राजसूयावभृथाभिषिक्तं यः पाण्डुवध्वाः किल केशहस्तम् ।
पश्चापि तस्या अवधीर्य भर्तॄन् पस्पर्श रोषादयमेष पाणिः ॥

**जटासुरः** — राजकुमार, मा कुरु साहसम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भटस्य दर्पप्रतिघो जटोऽहं दुश्शासनस्यापि न शासनीयः ।
कुरूद्वहस्यापि गुरूद्वहोऽहं जानन्ति मां शाकुनिकं न सर्वे ॥

( नेपथ्ये )

भोः शाकुनिक, अयमेष ते प्रत्यभिज्ञाता ।

**दुश्शासनः** — अरे मुधातापस, प्रच्छन्नपापाचार, दुर्विकत्थन, किं दुश्शासनप्रतिस्पर्धितया मुखरायसे ।

( इत्यर्धचन्द्रमुपहरति । )

**जटासुरः** — हन्त भोः, परित्रायध्वं मां शकुनिपक्षपातिनः ।

( ससंभ्रमं प्रविश्य )

**शकुनिः** — कुमार, अलमस्मदाप्तप्रणिधिं जटासुरं हिंसित्वा ।

**दुश्शासनः** — हन्त, किमेष विप्रवेषो जटासुरः । सखे मर्षय मर्षय, मदज्ञानविहितमविनयम् । कुतः प्रागेव नेदमाह भवान् ।

( प्रविश्य )

**कर्णदुर्योधनौ** — कथमत्रैव चिरादस्माभिरन्विष्यमाणो महोपकारधृतसन्धोऽस्माकं मित्रं जटासुरः ।

**जटासुरः** — निरवद्ये मौद्गल्यकुले जातोऽहं नियमाध्यायी वेदवेदाङ्गपारगः तपःपरिक्लेशितात्मा कथं जटासुरो वस्संपद्ये । पश्यत,

पञ्चानामेकपत्नीत्वाच्छीलसन्देहवञ्चितः ।
कृष्णाया अन्नसत्रेषु न भुञ्जे क्षुधितोऽप्यहम् ॥ २८ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपि च,

स वेत्ति धर्मसूनुर्मां त्रिकालज्ञं तपस्विनम् ।
भीमार्जुनाभ्यां मां प्राप्य योऽचिरादर्चयिष्यति ॥ २९ ॥

**शकुनिः** — (विहस्य) हन्त, निष्पन्नं कार्यम् । महाब्राह्मण, मा कुप्य । वयमपि त्वामर्चयिष्यामः । आस्स्व तावत् । (सर्वे निषीदन्ति) ब्रूहि सखे, कियदालोडितश्शत्रुधैर्यमहोदधिरिति ।

**कर्णः** — अहो नैपुणं प्रतीतवञ्चने असुरप्रणिधेः ।

**दुर्योधनः** — अनया प्रहेलिकया जाने अपुनरावर्तिनमजातशत्रुम् ।

**जटासुरः** — अवितथमाह महाराजः । अस्मिन्नुपक्रमे महदुपकृतं दैवेनेति वक्तुमुचितम् । अर्जुनस्याजगरीभावरूपं शापमुपक्षिपति मयि ग्रस्तोऽजगरेण भीम इति केचन भिल्ला अजातशत्रुमुपेत्याक्रोशन् ।

**दुश्शासनः** — कुतस्त्वया ज्ञातोऽर्जुनस्य शापवृत्तान्तः ।

**शकुनिः** — अतिमुग्धः प्रश्नः । युधिष्ठिरव्यामोहाय किमप्युत्प्रेक्षितं सुश्लिष्टमनेन प्रज्ञाशालिना । तच्च संवादितं कुत्रचिदंशे दैवेन । सुहृन्मणे, ततस्ततः ।

**दुर्योधनः** — किमूचिरे भिल्लाः ?

**जटासुरः** — अजगरेणावेष्टितशरीरः प्रमुग्धचेतनो भीमसेनः । तं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च मानुषवाचा वदन्तं संगरेण संस्तभ्य नकुलोऽस्मान् भवदानयने न्ययोजयदिति ।

कर्णः — किं नकुलः स्वयमेव सरीसृपं न खण्डयति । ततस्ततः ।

जटासुरः — तदा मया प्रतिबोधितो युधिष्ठिरः — नूनमप्राकृतो-ऽयमजगरः, भीममपि यः परिभावयति । यश्च मानुषवद्व्याहरति । निस्संशयमर्जुन एवायमजगर इति ।

दुर्योधनः — अहो सुश्लिष्टता सङ्कटनायाः । ततस्ततः ।

जटासुरः — ततो भिल्लैरुपदिष्टमार्गः रुदन्नभिप्रस्थितो धर्मसूनुः ।

दुश्शासनः — अहमप्यजगरस्य स्वशरीरेण पारणां निर्वर्तयामीति वा ।

कर्णः — सम्यगाह कुमारः । नूनं कथाशेषाः युधिष्ठिरभीमनकुलाः एतावतैव कालेन । नमः कुरुकुलोपकारिणे महाऽजगराय । पूजयितव्यस्सप्रयत्नमन्विष्य सोऽजगरः ।

शकुनिः — (स्वगतम्) निरवलम्बविजृम्भणो मण्डूकप्लुतिपेशलः स्वानुकूल्योन्नयनकोलाहलो मूर्खाणाम । (प्रकाशम्) सुष्ठु खल्वे-तत् । यदजगरे संभावितानिजभारावरोपणाः शौर्यश्लाघिनो यूयं विश्रमिष्यथ ।

दुर्योधनः — (जनान्तिकम्) यदि वस्तुतस्सोऽजगरोऽपि जिष्णु-रेवाभविष्यत् तदा निश्चिन्तास्समुच्छ्वसितुमपारयिष्याम ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सोऽधिरोहति शौर्यस्य निश्रेणिं पार्वणेन्दुवत् ।
स गाण्डीवी पाशुपतं प्राप्य चास्त्रं किमुच्यते ॥ ३० ॥

कर्णः — अलं चिन्तया । मदपेक्षयैव खलु दैवमवशेषयति पाण्डवमध्यमम् । यस्मिन्नेकस्मिन्नेवाखण्डेऽस्मिन्भुवने प्रतिद्वन्द्विशब्दं मामन्तरेणावितथं संभावयामि । यमनिर्जित्य च मुधाधीतानि मया अस्त्रशस्त्राणि । तेन हि श्रृणोतु महाराजो मे सन्धाम् । श्रृण्वन्तु लोकपालाः, पुष्पवन्तौ द्यावापृथ्व्यौ च ।

तावन्न धावयाम्यङ्घ्री न भुञ्जे सलिलोद्भवम् ।
नास्तीति नैव वक्ष्यामि यावन्न निहतोऽर्जुनः ॥ ३१ ॥

दुर्योधनः — (कर्णमाश्लिष्य) सखे कथं मत्कृते घोरामुपारूढोऽसि प्रतिज्ञाम् । न चेतः परं मे शङ्कालेशः फाल्गुनात् ।

जन्मसिद्धेन कवचेनाप्रधृष्यस्त्वमद्य नः ।
सर्वेषां कर्ण जातोऽसि दुर्भेद्यः कवचः स्वयम् ॥ ३२ ॥

तेन हि निस्संशयं जिता पृथिवी । प्रत्यस्तमिताः पाण्डवाः । निर्वृत्तो राजसूयः । अवितथं दानवीरस्त्वं यो मे प्राथम्येन निजभुजबलोष्मणापोहितप्रतिपक्षशङ्काजाड्योद्रेकस्य प्रतिपादितवानसि सर्वंगतां प्रतिष्ठाम् ।

(नेपथ्ये)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भोः, को नु स्याद्दानवीरो योऽद्य मद्वाञ्छां पूरयेत् ।

दुर्योधनः — किं पुनरेवास्माकं दुर्वासाः ।

(प्रविश्य)

भटः — देव, कोऽपि स्थविरो विप्रः अर्थी सन् दातारमान्विष्यति ।

कर्णः — एषोऽस्मि दीक्षितः । प्रवेशयार्थिनम् । अथवा समाहूय दानं नामार्थिजनस्य विधेयतामित्यावगमयति । भीमक, कुत्र सोऽर्थी ।

भटः — एषोऽध्वपरिश्रमेणाविदूरे तमालमूले दण्डकाष्ठमवष्टभ्य तिष्ठति ।

कर्णः — तेन हि न युक्तं तं क्लेशयितुम् । प्रतिपत्तिपूर्वकं दत्तं हि दत्तं भवति । अन्यथा नाशितमेव । अनुजानन्तु मां सुहृदः ।

शकुनिः — मा तावद्भवानतिमात्रमुपलालयत्वर्थिनम् । कदाचित् प्रत्यर्थिनोऽप्यर्थिन इवोपतिष्ठन्ते ।

जटासुरः — अहमिव युधिष्ठिरं विप्रवेषेण ।

कर्णः — गान्धारराज,

दत्तं प्रागेव तस्मै तद्यदयं याचयिष्यते ।
वाञ्छितार्थपरिच्छेदः केवलो ह्यवशिष्यते ॥ ३३ ॥

(इति सभीमको निष्क्रान्तः)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुर्योधनः -- एवं खलु सर्वमुपपन्नम् ।

दुश्शासनः — सहदेव एकोऽत्रशिष्यते । स चेदग्रजापाये प्राणैर्न वियुज्यते द्वैपायनस्य पादमूलमुपाश्रयिष्यति ब्रह्म जिज्ञासुः । अन्ते च द्रौपदी त्रुटितेव वीरुत् महाराजमुपपन्नमाश्रयिष्यति ।

शकुनिः — कथं सर्वमुपपन्नमित्यवगच्छति भवान् । किन्न बालिशा यूयं ये त्रयाणां पाण्डुसुतानां अजगरेण निगिरणं सिद्धवत्कृत्य स्वैरमुत्कूर्दध्वे । न जानीथ धर्मसूनोर्दुरवस्थोन्मोचनं धर्मनैपुणम् ।

दुश्शासनः -- तस्मिंश्च पर्याये भवत्येव खलु पाण्डवानां मूर्त इवोत्पातो महर्षिर्दुर्वासाः ।

दुर्योधनः — कीदृशोऽद्य दुर्वासाः ?

जटासुरः — स खलु सहदेवेनातिथ्येनोपहूतः शिष्यैरितः क्रोशमात्रे सरस्वतीतीरे महान्यग्रोधषण्डमण्डपोपभोग्ये प्रदेशे अभिषेकजपध्यानादिभिर्व्यापारैर्निसर्गभूतमातिथ्यग्रहणविलम्बमातनोति ।

दुर्योधनः -- यद्येवं सिद्धं हि नः कार्यम् । अवेलेयमक्षयपात्रमहिमोन्मेषस्य । पश्यामस्तावत्कथं शिष्यसहस्रपरिवारं दुर्वाससमद्य भोजयिष्यति सुधासूर्यप्रसादगर्विता पाञ्चालीति ।

दुश्शासनः -- अवितथमाह महाराजः ।

शतं सूदा यस्मिन्परिकरमहोरात्रमवहन्
यथाकामं चाभूदपचितिविधौ सिद्धमखिलम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स तेनाप्यस्माकं कथमुपगतश्चेत्सुमुखतां
वने निस्संभारा मुनिमुपचरिष्यन्ति किममी ॥ ३४ ॥

**शकुनिः** — दिष्ट्या प्रारम्भ एव विषमः कृतो महर्षिणा । तेन हि सखे, कोपस्थानेषु दृढमेनमुद्दीपयितुमस्यैव पार्श्ववर्ती भव ।

**जटासुरः** — मयैवैतच्चिन्तितम् । तथापि प्रथमं द्रौपद्यै महाजगरवृत्तान्तं पिशुनयित्वा पश्चाद्दुर्वासस्सशिष्यगोष्ठीं प्रवेक्ष्यामि ।

**दुश्शासनः** — प्रथमः कल्पः । तथैव कुरु । अहमप्यनुपदं गत्वा तस्याः प्रागनिर्विष्टस्य केशाम्बराकर्षणस्याद्य निरनुशयं करिष्यामि । गच्छ सिद्धिस्ते भवतु ।

**दुर्योधनः** — सखे जटासुर, अनुद्वेज्य तां यत्किञ्चनप्रत्याशया इहैव प्रेषय । पश्चाद्द्रक्ष्यामः कालोचितम् ।

**जटासुरः** — सविमर्शमाभिहितं महाराजेन । तथैवानुष्ठास्यामि । (इति परिक्रम्य) अये जालिकबन्धनं स्वेनैवाभिकाङ्क्षति मृगी । (निवृत्य) महाराज, दूरे खलु चटुलपदं चकितेव प्रधावन्ती पाञ्चाली प्रदेशमेनं प्रत्यासीदति । तदनन्तरकरणीये व्यग्रो भवामि ।

(इति निष्क्रान्तः ।)

**दुर्योधनः** — कथं पाञ्चाली स्वयमुपावर्तते । किं चिरयतीति धर्मसूनुमन्वेष्टुं निर्गता । तेन हि निगूढास्तिष्ठन्तस्तामुपलभामहे ।

**दुश्शासनः** — परिस्फुरति मेऽग्रहस्तः धूर्तिकाया निरवग्रहमम्बराकर्षणं निर्वोढुम् । ( सर्वे निलयनकान्याश्रयन्ते )

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( ततः प्रविशति चकितं पलायमाना द्रौपदी )

**द्रौपदी —** कुतः खल्वनुष्ठानवेलामतिक्रम्यापि चिरयति मे नाथः । अद्य पौर्णमासीति चन्द्रपादानर्चयितुं स्नानविशुद्धा यावदाश्रमोपान्तसरस्तीरे कुसुमापचयं कुर्वती तिष्ठामि, तावन्नीचोऽयं सिन्धुराजहतको निर्लज्जो मामनाथामिव प्रार्थयते । पदे पदे चैवमुपस्थितसङ्कटायाः नाथमार्यभीमसेनमेवानुधावति परितप्यमानं हृदयम् । कष्टं खलु कृतं मया स्त्रीस्वभावसुलभेन चापलेन सौगन्धिकान्युपाहर्तुम् आर्यं विश्लेषितवत्या । अनुभवाम्यात्मकृतस्याविचारितकृत्यस्य कटुकं विपाकम् । अद्य कुरुराजो राजसूयेन यक्ष्यते । अद्य जयद्रथो मामभिकामयते । अथ च किं किमन्यन्न मे भविष्यति दैन्यम् । यदा तृणं चरन्ति मृगेन्द्राः ओजायन्ते न किं ग्रामसिंहाः ।

( नेपथ्ये )

पाञ्चालि, प्रसीद, प्रसीद, तिष्ठ तावत्क्षणमात्रम् ।

**द्रौपदी —** हा धिक्, किमवधीरितोऽपि श्वकल्पोऽयमधमो मत्पदवीमनुबध्नाति । किमनाथाऽस्मि संवृत्ता । भगवति निशीथिनि, अम्ब ज्योत्स्निके, मातस्सरस्वति, देवि वसुन्धरे, कथमतिक्रममेनं साक्षिभूततया उपेक्षध्वे । अथवा मन्दभागिनीं मां परित्रातुमपि किं लज्जन्ते भगवत्यः । एष तीर्थावतारोद्देशः । नात्रोचितस्थले मे नाथः । किमिदानीं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करोमि । हा नाथ, क्वासि, क्वासि । आर्यपुत्राधिगमप्रत्ययेन किलैतावतीं भूमिमाश्रमान्निर्गताऽस्मि । किमाश्रमपदमेव नोपावर्तितं मया यदभितः प्रायेण सन्निहित आर्यसहदेवः । अहो भयङ्करेयं वेला । गुणिनामग्रत इव खलजनः, अखण्डज्योत्स्नापूरायामप्यस्यां निशायां गहनतया मलीमसमेव प्रायेण बिभर्ति विपिनोदरः । धिङ्मां, निरन्तरोद्वेगनिर्दग्धजीवितां पापिष्ठाम् । हे माधव, हे आपद्बन्धो, हे अनाथरक्षक, हे पाञ्चालीपरिभवासहन, हे पाण्डवपक्षपातिन्, त्वमेवाद्य अगतिकाया मे गतिः । हे करुणानिधे, मोचय मामस्माद्दुर्जनोपमर्दात् । हन्त, पर्णेषु पदशब्द इव । किं दीनोद्धरणदीक्षितो मामनुकम्पते ।

(इति साश्वासं परावर्तते ।)

(प्रविश्य)

**जयद्रथः** — अयि मोहनाङ्गि, त्वदनुकम्पाप्रतीक्षिणि त्रिभुवने कस्यानुकम्पां प्रार्थयसे । एषोऽस्मि ते लावण्यजितो दासः । प्रसीद, प्रसीद, निरनुक्रोशे ।

आनीलां चपलेव तोयदघटां विभ्राजयन्ती वनीं
भिन्दन्त्यग्निशिखेव मारुतधुता वृक्षोपगूढं तमः ।
चञ्चन्ती मृगशावकाक्षि चकितं दृष्ट्वैव मामग्रतः
सर्वाङ्गैरनुकम्पसे न हृदयेनैकेन केनाधुना ॥ ३५ ॥

(इति प्रणिपतति)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्रौपदी — धिक् त्वां, धिक् त्वाम् । अपेहि रे जाल्म । अपेहि ।

(इति पलायते ।)

दुश्शासनः — (उत्पत्य) पाञ्चालि, कुत्र पलायसे । स्मरसि माम् । न किलाधुना मत्तः स्वमात्मानं विमोचयितुं पारयिष्यसि ।

(इत्यनुधावति ।)

दुर्योधनः — (निर्गत्य) दुश्शासन, मा तावत् । अयि अक्षयपात्रगर्विते, अतिथयो वयमुपस्थिताः । किं पलायसे ।

जयद्रथः — दुश्शासन, तिष्ठ, तिष्ठ । अहमेवैनामासादयामि ।

द्रौपदी — अहो घोरतमश्वापदाकीर्णमिदं वनम् । हा आर्यपुत्र, अजातशत्रो, क्वासि । हा नाथ, भीमसेन, किं न मां परित्रायसे प्रियपरिचारिणीम् । हा गाण्डीविन्, स्वर्लोकपरिचितः किं मामेकपदे विस्मृतवानसि । हा दीनानाथशरण्य, पाञ्चालीमानसंरक्षणधुरन्धर, वासुदेव,

शकुनिः — भवति, मा गमः कातर्यम् । बन्धुभिरेवासि परिवृता ।

द्रौपदी — हा कृतान्त, दर्शयाद्य मे भर्तॄन् । क्व मे भीमः । क्व मे गाण्डीवी । क्व मे पाण्डवाग्रजः । क्व मे नकुलसहदेवौ ।

दुर्योधनः — द्रौपदि, बाढं कृतान्त एवाद्य ते भर्तॄन् दर्शयितुं प्रभवति । कुतोऽद्यापि ते भीमः । स खल्वजगरेण निगीर्णः । कुतोऽद्यापि ते गाण्डीवी । स किल शच्याः शापमवाप्याजगरो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवन् गण्डोपलेषु विवेष्टमानो दिष्ट्या भीममेवासाद्य मड-मडाययामास । कुतोऽद्यापि ते धर्मसूनुः । स किलानुजयोर्विपत्तिं दृष्ट्वा स्वमात्मानमजगरायैवोपनिनाय । नकुलोऽप्येवमेव ।

**द्रौपदी** — आः पाप, किं मे देवरूपाणां भर्तॄणामत्याहितमाभि-दधासि । एवमलीकाख्याने धृष्टस्त्वमाचिरादात्मन एव मूर्धनि आमन्त्रयसे घोरमशनिपातम् ।

**दुश्शासनः** — आर्य, किं न मामनुजानाति भवान् कटुप्रला-पिनीमेनां निरोद्धुम् ।

**दुर्योधनः** — अयि मुग्धे, अवितथमेतत् । विपन्नास्ते भर्तारः ।

**द्रौपदी** — धिक् त्वां कुलपांसनम् । त्वमेवाद्य विपत्स्यसे सबन्धु-मित्रः ।

**दुश्शासनः** — धृष्टे, कथं स्वच्छन्देन भाषसे । इयं न भवसि ।

**जयद्रथः** — दुश्शासन, तिष्ठ । इयं खलु मया प्रथमं प्रार्थिता । द्रौपदि, उपाश्रय मे बाहुपरिघम् । रक्षिता भविष्यसि ।

**द्रौपदी** — हा ईश्वराः किमकरुणा यूयम् । परित्रायध्वं परित्राय-ध्वमबलाजनं पापिष्ठैः परिभूयमानम् ।

( ततः प्रविश्य आकाशे )

**चित्ररथः** — आदिष्टोऽस्मि मघवता – ( अधोऽवलोक्य ) हा धिक्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कथं पाञ्चाली परिभूयते। स एव दारुणो द्यूतसभावृत्तान्तः पुनरावर्तते। अवितथं खलूत्प्रेक्षितं मघवता। ध्वंसयितव्या एते भूभारभूताः पापात्मानः। अये, धनुर्धनुः।

(प्रविश्य)

**गन्धर्वः** — स्वामिन् इदं धनुः।

**चित्ररथः** — हेमपृष्ठ, सज्जीकुरु गन्धर्वपरिषदं संप्रहाराय। अनीकिनीसहायः कुरुराजः। युद्धं चात्र भविष्यति।

(इति धनुरासज्जयन् बाणं सन्धत्ते)

**गन्धर्वः** — तथा (इति निष्क्रान्तः।)

**शकुनिः** — पाञ्चालि, किं मुधाप्रलपितैः। इत्थं दैवेन निजोपघ्नेभ्यो विलोटिता त्वं वल्लरीव कुरुराजस्य बाहुस्तंभमुपाश्रयिष्यसि।

**दुर्योधनः** — ऊरूपीठीमिति सांप्रतम। दुश्शासन, निगृह्णीष्वैनां केशेषु। जयद्रथ, राजदायः खलु।

**दुश्शासनः** — अयि दुर्विदग्धे, पाञ्चालि, दृढं लग्नाऽस्यद्य मे हस्ते। कस्त्वां मोचयिष्यति। (इति हस्तमुद्यम्य धावति)

**द्रौपदी** — हा धिक् हा धिक्। परिभूताऽस्मि। मुषिताऽस्मि भोः। (इति सभयं वल्गति)

**चित्ररथः** — प्रथमोपहारोऽयं मन्मार्गणस्य दुश्शासनहतकः।

(इति विध्यति।)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दुश्शासनः** — हा हा हतोऽस्मि । (इति पतति ।)

**दुर्योधनः** — भोः किमेतत् । दुश्शासन, न भेतव्यं, न भेतव्यम् ।

**द्रौपदी** -- दिष्ट्या, दिष्ट्या । पतिकुलदेवता मामनुकम्पते ।

(इति निष्क्रान्ता ।)

**शकुनिः** -- कोऽप्येष वियच्चरः प्रहरति ।

**दुर्योधनः** -- जयद्रथ, अवलम्बस्व वत्सम् । मातुल, किमर्जुनः प्रतिनिवर्तते ।

**शकुनिः** — तथैवेति तर्कयामि ।

**दुर्योधनः** — मातुल, क इदानीं कर्णस्य वृत्तान्तः ।

**चित्ररथः** — अरे, कुरुकुलाधम, जघन्यकृत्य, निर्लज्ज, निबोध मां गन्धर्वराजं चित्ररथम् । अरे, दुष्कृतैकनिधे, अनुभोक्ष्यसे सांप्रतं ते साध्वीपरित्रासनस्य दुष्परिणामम् । (इति शरान्वर्षति)

**दुर्योधनः** — अरे, गायकाधम, किं समरविद्यामपि नृत्तविद्यामवेत्य प्रगल्भसे । एष निगृह्णामि ते अहंकारविस्फूर्जितम् । भो भोः परिजनाः सज्जीभवत युद्धाय । अग्रे, धनुर्धनुः । वयस्य, कर्ण, कासि भोः । वत्स दुश्शासन, समाश्वसिहि समाश्वसिहि । मातुल, मातुल, एह्येहि सेनानिवेशमेव गच्छावः । अरे गन्धर्वहतक । आकाशयानमिथ्यागर्वित, तिष्ठ तिष्ठ । क्षणेन त्वां विस्वरं गाययामि । जयद्रथ, समानय वत्समवलम्ब्य ॥

(इति ससंभ्रमं निष्क्रान्तास्सर्वे)

**इति पञ्चमोऽङ्कः ।**

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ षष्ठोऽङ्कः ॥



( ततः प्रविशति मातलिवाहितेनाकाशयानेनार्जुनः । )

**मातलिः** — कुमार, सकौतुकाश्चर्यं पश्य परितः ।

एष व्योममहापथो दिविषदां स्वैरावगाहोचित-
स्तिर्यक्चोर्ध्वमधश्च यः प्रसरति स्ववाहिनीलङ्घितः ।
यस्यैते रथिनो यथा ग्रहगणास्सूर्येन्दुजीवादय-
स्तारावेश्मनिरन्तरे विदधति स्त्याने प्रयाणोद्यमम् ॥

**अर्जुनः** — मातले, ननु निर्विशाम्यमानुषलङ्घनीयं अनिन्द्रिय-गोचरमहिमानं गगनभूमानम् ।

इह हि नाकपुरीतटिनीभ्रमल्लहरिकामुरजारवबृंहिताः ।
श्रुतिसुखा विचरन्ति विनिष्पतद्ग्रहजवोद्भवझाङ्कृतिगीतयः ॥

सखे, अद्य हि,

निरवधिगगनावकाशवेग-
प्लवनभवो मम चेतसि प्रमोदः ।
निरवधिरनिरूपितस्वरूपो
गगनवदेव विभुः प्रकाशशाली ॥ ३ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मातलिः** — कुमार, किंस्विदवबुध्यसे कतरस्यां व्योमविटङ्क-भङ्ग्यां त्वमधुना वर्तस इति ।

**अर्जुनः** — यत्सत्यं किमप्यन्तरानन्दनिर्भरः स्वात्मानमेवास्मिन्क्षणे व्यस्मार्षम् । तदवधारयामि तावत् । (विमृश्य) सखे, इन्द्रसारथे,

धूमव्याकुलिते क्वचित्क्वचिदथो बाष्पोपरुद्धे क्वचि-
ज्ज्योतिर्हीतिनिरिन्द्रिये क्वचिदपि प्रक्षाल्यमाने जलैः ।
येनेमे नयनेऽद्य मेऽनुभवतश्चित्राण्यवस्थान्तरा- ?
ण्यब्दानामवकाश एष हि महीप्रावारकप्राभवः ॥

**मातलिः** — सम्यग्दृष्टं कुमारेण । कुमार, दर्शनीयतमां पुष्यत्यद्य शोभां मेघमालाविततोऽयं गगनाभोगः चन्द्रमसः कान्ति-प्रसरचमत्कारेण । तथा हि,

दूरोत्सेधवदूर्मिभङ्गिविलसन्मेघोपधानावली-
पीठीशायितपाद एष रजनीनाथोऽद्य शेते सुखम् ।
तत्कान्तिच्छुरणस्फुरन्नवपृषत्कास्वादतर्षान्मिथ-
श्चञ्चच्चञ्चुचकोरचातककुलान्युच्चैः कलिं कुर्वते ॥ ५ ॥

**अर्जुनः** — मातले, पश्यावनम्रया दृष्ट्या तरसाऽस्मान्प्रत्युद्गच्छन्तीमिव भगवतीं वसुन्धराम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्यौश्चक्राजरदिन्द्रकोपकमिता पश्चादियं कच्छप-
प्रेक्ष्या संप्रति काश्यपी वत परिच्छेदार्हतां गच्छति ।
पृथ्वीभृद्विपिनावलीह्रदनदीव्याकीर्णरूपा पुर-
स्तूलोन्मीलितसौष्ठवेव वनिता चित्रार्पिता व्यज्यते ॥

सखे, किमप्युत्सुकायते मे चेतः प्रियबन्धुजनसमागममारादुत्प्रेक्षमाणम् । प्रागेव मत्सहभुवां मध्यवर्तिनमात्मानमवगच्छामि । अथ च प्रत्युपसन्नः —

प्रथममवनतो भ्रातुरग्रचस्य पादाब्जयोस्तेन सास्रेण
मन्दमुत्थापित-
स्तदनु विनयनम्रोऽपि वत्सेति वेगाद्विकृष्यार्यभीमेन
गाढमालिङ्गितः ।
विकचकुवलयोदारदृक्पातसंभावितः कृष्णया
विस्मृतस्वदुःखौघया
नकुलमनुकनिष्ठं तमाश्लेषयिष्यामि पादानतं
विस्मयानभिज्ञं चिरात् ॥ ७ ॥

मातलिः — कुमार, किमवलोकयसि विमानेन द्रागतिलङ्घ्यमानं कुलगिरिं हिमवन्तम् ।

आवास एष सुरमानुषदानवानां
बिभ्रत्तुषारजलभृद्विपिनान्यधोऽधः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृत्स्नप्रपञ्चघटनाप्रतिरूपकल्पो
जागर्त्यपारमहिमा गिरिसार्वभौमः ॥ ८ ॥

**अर्जुनः** — बाढं प्रेक्षे महादेवश्वशुरं शृङ्गावलिभिस्सहस्रशीर्षमिव विराट्पुरुषम् । तेन हि अदूरवर्तिनो वयं सरस्वतीपरिक्षिप्तस्य काम्यकवनस्य । मातले, अपूर्वेयमधुना दृश्यते मे मानसी वृत्तिः ।

त्वरयति बन्धुदिदृक्षामनोरथो मां प्रवासपरिखिन्नम् ।
अन्तः किमपि च कर्षति जाड्यमिवोत्साहवाजिनो रश्मीन् ॥

यतः,

हरप्रसादं दिगधीश्वराणा-
मनुग्रहं चास्त्रपरिग्रहं च ।
स्वर्गे च पूजां गुरुरादरान्मे
जिह्रेमि यावत्परिपृच्छतीति ॥ १० ॥

**मातलिः** — अहो सुभगता महोदाराणां गुणानुभवप्रसङ्गस्य । तथाहि,

विगीतं कर्म निर्वाह्य लज्जन्ते न ह्यसाधवः ।
कर्म निर्वाह्य देवेन्द्रश्लाघितं लज्जते भवान् ॥ ११ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अर्जुनः** — मातले, कुतो न लज्जे । विचित्रा खलु गभीरहृदयानामनुग्राह्ये जने प्रेमाविष्करणपद्धतिः ।

अकुशलमुपलम्भिताधिकारं निजपदमधिरोप्य हन्त वाहयन्तः ।
अधिगमितगुणप्रकर्षमारात्स्वयमुपजातमिव स्तुवन्ति सन्तः ॥

**मातलिः** — कुमार, तथाऽप्युपपन्नमेतत्पश्यामि । यतः,

दिक्षु निष्णातमहसां श्लाघनीयमिदं ननु ।
यदात्मीयेष्ववस्थाप्य स्वाधिकारं विरम्यते ॥ १३ ॥

**अर्जुनः** — (अधस्तान्निर्वर्ण्य) मातले, किन्न्वेतत् ?

किंस्विद्व्योमनिषङ्गसंभृतलसत्सौवर्णपुङ्खान् शरान्
ताराख्यानवकीर्य खेलति करैः स्वैरिन्दुरभ्युद्धृतान् ।

**मातलिः** — (विमृश्य)

वृष्टिर्वह्निमुचामियं हि खचरैरावर्त्यते पत्रिणा-
मेषां मानुषवाहिनी भुवि तनोत्यौन्मुख्यमुच्चावचम् ॥

अये, चित्ररथानुगं गन्धर्वसैन्यं शरवर्षैरभियुङ्क्ते धार्तराष्ट्रान् सवाहिनीकान् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अर्जुनः** — कथं धार्तराष्ट्रानिति । कुतो नु खल्वेतत् । मातले, चार्मिके मे चक्षुषी नालं व्यक्तिविशेषानुपलब्धुम् । तदभिवर्णय मे यद्यदिलातले प्रवर्तमानं पश्यसि ।

**मातलिः** — हिमवतो दक्षिणतस्सोऽयं सरस्वतीतीरोपान्तः, यत्र तत्काम्यकं वनम् । तन्मन्ये युष्मदाश्रमोद्देशस्य नेदीयस्यरण्यविभागे जातोऽयमुपमर्द इति । हन्त भोः, अविकलमेतत्कौरवकुलमस्मिन्नभियोगे मिलितम् । एष सुयोधनः । एष शकुनिः । एते दुश्शासनादयः ।

**अर्जुनः** — कुतः खल्वत्रायोधनमेतेषां गन्धर्वैस्सह प्रसक्तं स्यात् ।

**मातलिः** — चित्ररथः किल भवता त्वदागमनमन्तरेण प्रियाख्यानकः प्रेषितो धर्मसूनोरन्तिकम् । तेन हि मन्ये, अनुध्यातयुष्मदग्रजोपमर्दानां धार्तराष्ट्राणां प्रवृत्तिमुपलभ्य चित्ररथेन प्राप्तकालं किमप्यनुष्ठीयत इति ।

**अर्जुनः** — भवितव्यम् । कच्चिन्नावसीदति ते सखा संपराये । अथवा किमधिकारो भवत्वत्र मे गाण्डीवस्य ।

**मातलिः** — मा तावत्सहसाऽवतरतु भवान् समरमुखम् । अहो आश्चर्यम् ।

**अर्जुनः** — मातले, न तावत्खल्ववतरामि । कुतस्ते संभ्रमः ।

**मातलिः** — कुमार, आकृतिसाम्येन विप्रलब्धोऽस्मि । दिष्ट्या वर्धसे शौर्यसंप्रदायेष्वनवरेण ते तनूजेन ।


CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अर्जुनः** — कथं वत्सो मेऽभिमन्युरप्यत्रैव ।

**मातलिः** — अथ किम् ।

तुमुले वर्तमानेऽस्मिन् मृधे समभवत्पुरः ।
आकर्णं धनुराकर्षन्नभिमन्युः क्रुधान्वितः ॥ १५ ॥

अहो बालभावः पुरस्कृतः खल्वमुना । केवलं युद्धरसो दर्शितः । न त्ववधारितश्शत्रुपक्षः । येनासौ कौरवाणामवसादं दृष्ट्वा बन्धुपरीप्साधौरन्धर्यमङ्गीकरोति शरवर्षैर्गन्धर्वानर्दयन् ।

**अर्जुनः** — मातले, अतिसाहसमेतदनुष्ठीयते वत्सेन । अभियोक्तृसामान्ये गन्धर्वैर्विमृद्यमाने वत्सस्यात्याहितमिवोत्पश्यामि । तत्तूर्णमवरोहतु महीं विमानम् ।

**मातलिः** — कुमार, अलं कातर्येण ।

परिध्वस्ते सैन्ये भजति रणशय्यामुत भयाद्
द्रुते दूरं वीरैरिह कतिपयैस्संयति वृतः ।
कुरूणां नाथोऽसौ निहतहयसूतध्वजरथो
जवाज्जीवग्राहं मृग इव गृहीतो हयमुखैः ॥ १६ ॥

शान्तप्रायसंपरायः । संप्रति तु,

धावं धावं तुरगवदनैस्सन्निरुद्धाश्च बद्धा
भृत्या भूपा युवतय इति प्रायशो निर्विशेषम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकृष्यन्ते करुणविवृतं क्रन्दिनः स्यन्दनेष्व-
प्यारोप्यन्ते कुरुपरिवृढास्सावरोधास्सयोधाः ॥ १७ ॥

**अर्जुनः** — कीदृशो मे वत्सः ?

**मातलिः** — (विहस्य) अहो धिक् ।

ह्रियमाणेषु सर्वत्र वद्ध्वा दुर्योधनादिषु ।
सौभद्रः कुरुते शौर्यमुग्रं तेषां विमोचने ॥ १८ ॥

नूनं बाल इत्येनमुपेक्षन्ते गन्धर्वाः; अथवा प्रत्यभिजानन्तो वत्सलतया ।

**अर्जुनः** — मातले, कातरोऽस्मि किञ्चिद्वत्समुद्दिश्य । अपि च द्रष्टव्यस्समरविजयी मे भरतशिक्षागुरुश्चित्ररथः । तच्छीघ्रमवतारय रथम् ।

**मातलिः** — तथा । अवसरश्चायं सुघटित इति पश्यामि ।

शिक्षिता स्त्रीकला यैर्हि तैर्बद्धस्तुरगाननैः ।
कौरवापसदः प्रेक्ष्यः त्वया शक्रार्चितौजसा ॥ १९ ॥

(इत्युभौ निष्क्रान्तौ ।)

॥ विष्कम्भः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( ततः प्रविशति द्रौपदी । )

**द्रौपदी** — आर्य सहदेव, शत्रुजनाकीर्णे विपिने अप्रमादेन गन्तव्यम् । हन्त कथमुभावपि दृक्पथमतिक्रान्तौ । शुभास्सन्त्वनयोः पन्थानः । हा विधे, किं मद्भागधेयैरेवं परिक्रीडसे । निरन्तरोद्वेगनिष्टप्तं मे हृदयं किं भूयो वज्रनिर्घातैर्भिनत्सि । किमेवमेकस्याः पाञ्चाल्याः प्रागेव शोकपरिप्लुतामन्तःकरणदीपिकामाघूर्णयितुं सङ्घशो मेलयितव्यान्यत्याहितफूत्करणानि । अहो बत किमेवमासीत् ।

समाकीर्णं घोरैर्निरनुशयचित्तैर्वनमिदं
पतीनां शंसन्ति प्रतिभयमनिष्टं मम च ते ।
महर्षिर्दुर्वासाः उपनिपतितो भिक्षितुमयं
क्व सामग्रीलेशः किमिह करवै का गतिरहो ॥ १ ॥

(क्षणं ध्यात्वा) एकेन दुर्वाससा परितोषितेन शक्यमापदन्तराण्यपवोढुम् । स हि महाप्रभावः प्रसन्नश्चेत्किं किं न मे श्रेयः कल्पयितुं न कल्पते । (अक्षयपात्रं हस्तेनादाय) अयि महोपकारिन् सखे, त्वदायत्ते मम महर्षेस्समाराधने किमुदासीनमिव भवसि । अथवा कुतस्त्वामुपालभे ।

प्रसादात्ते सिद्धैरपरिगणितान् भूसुरगणा-
न्समृद्धैर्दिव्यान्नैः खलु परिचराम्यन्वहमहम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अकालोऽयं नो चेन्मम भवति कार्पण्यमिह किं
त्रियामा नामेयं तिरयति तवाहोपुरुषिकाम् ॥ २ ॥

अयि मातर्निशीथिनि, कुरु दीनायां मयि दयाम् ।

संक्षिप्य यामानचिरात्त्रियामे
दिनोदयस्याकलयावकाशम् ।
अस्तु प्रभावोऽक्षयभाजनस्य
मासान्तरा भूस्त्वमिहान्तरायः ॥ ३ ॥

अथवा, भगवन् चन्द्र,

द्रवयसि परिमृश्य ग्रावमात्रान्करौघैः
कलयसि गिरिकूटेष्वौषधीर्दीप्यमानाः ।
रविकरविनिसृष्टा एव खल्वंशवस्ते
वितरसि महिमानं किं न पात्रस्य रात्र्याम् ॥

अहो धिक्, किमेभिर्मुधामनोरथपल्लवितैः कालं क्षिपामि । केयं मुग्धप्रार्थना मे । किं वराकां पाञ्चालीं प्रीणयितुं संक्षिप्येत त्रियामा । रजनिकरो वा दिवाकरस्याधिकारमुपाददीत । कुतः खल्वक्षयपात्रस्य दिनारम्भादर्वाक् प्रभावोपपत्तिः । उन्मत्तिका खल्वस्मि । (इति पात्रमुचितस्थले निवेश्य) अयि महामहिम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शालिन्, विश्राम्येदानीम्। कः कालः प्रस्थितस्याद्य सहदेवस्य।
व्याघूर्णते मे हृदयं कीदृशमनिष्टं श्रोतव्यमद्य भविष्यतीति।
हा हन्त,

भद्रं मे पतिषु शृणोमि किं कुतो वा
पापानां किममुमुपप्लवं तरेयम्।
दुर्वासस्यपि कथमागसो विमुच्ये
दुर्गान्को न्विह विषमान्ममापविध्येत्॥ ५॥

अथवा, कोऽन्यो मे गतिर्भविष्यति ईदृशेषु संकटेषु मुक्त्वा
भगवन्तं द्वारकानाथम्। अयि वसुदेवनन्दन, प्रियबान्धव,

दुस्तन्त्राण्यरिविहितान्यपोह्य सद्यो
दौर्भाग्यक्षतजनुषां हि रक्षिता यः।
स त्वं भोः पितृभगिनीतनूभवानां
कृच्छ्रेऽस्मिन्मम च महत्युपेक्षसे किम्॥ ६॥

(विचिन्त्य)

तदा नो दुर्वासा नृपसदसि वृद्धास्सकरुणाः
न भर्तॄणां व्यापत् धुरि खलु निषण्णा अकलुषाः।
त एवैते पापास्तदिह पुनरिच्छन्ति वृजिनं
तदा मां रक्षित्वा भजसि किमिदानीं विमुखताम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तेन हि माधव,

शरणं शरणार्थिसार्थवाहश्रमनिर्मूलनमूलमन्त्रसिद्धिः ।
अयि दीनशरण्य दुर्गदुःखावटकूलंकषवाहिनी दया ते ॥

( नेपथ्ये )

कृष्णे, बुभुक्षितः खल्वस्मि । त्वरय मे भोजनम् ।

**द्रौपदी** — ( सभयकम्पम् ) हा धिक्, हा धिक्, उपस्थितः किल भिक्षार्थी मुनिः । किमहं करवाणि । असन्निहिता मे भर्तारः । कः प्रतीकारः । अयि शरणागतवत्सल, फाल्गुनप्रियसख, किमप्रतिपत्तिमूढामद्य मां न प्रत्यवपद्यसे । एवं त्वयाऽप्यपहस्तिता पाञ्चाली कीदृशी भवतु ।

( ततः प्रविशति परिग्लानिं नाटयन् कृष्णः )

**कृष्णः** — किं न त्वरयसे भोजनम् । बुभुक्षितः खल्वस्मि ।

**द्रौपदी** — ( साञ्जलिबन्धम् ) मर्षयतु भगवान् । ( दृष्ट्वा ) अयि देवकीनन्दन, प्रपन्नचिन्तारत्न, कृष्णाक्लेशासहन, स्वागतं ते ।

**कृष्णः** — कृष्णे, अलमनया शुष्कया स्वागतवाचा । यत्सत्यं बुभुक्षा मां बाधते । तदाशु भोजय माम् ।

**द्रौपदी** — एहि कृष्ण, त्वमेव सशिष्यमण्डलं दुर्वाससमद्य भोजयिष्यसि । दयालो, पूरय मे भिक्षाम् । अन्यच्च; न हि सर्वज्ञो न जानासि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृष्णः** — कृष्णे, एवं दर्शितस्ते बन्धुषु प्रवणत्वम् । कुतस्त्वयेयं नागरकला शिक्षिता । नेदृशीं चतुरां त्वामवागच्छं यदा राजसूययाजिनो महिषी पट्टबन्धमन्वभवः । निसर्गाद्बन्धुप्रिया त्वमरण्यवासेन कर्कशीकृतेति मन्ये । अथवा द्रुपदनन्दिनि,

किं मे स्मरस्यार्तिहृतौ विलम्बं
तदा सदस्याकलिताम्बरायाः ।
अक्षच्छले मामपराधिनं वा
वेत्सि त्वमारादकृताभिरक्षम् ॥ ९ ॥

यतः —

त्वमक्षयं पात्रमुपेत्य सूर्या-
दाराधयस्यार्षमिहैव लोकम् ।
बुभुक्षिताभ्यागतबन्धुभीता
तिरस्करोष्यभ्यवहारवार्ताम् ॥ १० ॥

अपि च लघुप्रार्थनस्य मे प्रत्यादेशपर्यायेण बहुप्रार्थनया लज्जामुत्पादयसि ।

**द्रौपदी** — कृष्ण, अलं परिहासेन । आर्ता खल्वस्मि । शरणागता खल्वस्मि ।

**कृष्णः** — बुभुक्षितः किलास्मि । अत्तिका चेदीदृशं मामद्रक्ष्यत

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नैवं प्रत्यवदिष्यत् । कृष्णे, या मां नित्यमुपचरस्यकैतवेनोपदायकैरुपच्छन्दयन्ती सा त्वमद्य स्वाधीनाक्षयपात्राऽपि निरूपिताशनायाबाधं मां न संभावयसि । अथवा ज्ञातं, किं बन्धुजनसुलभया ईर्ष्यया अक्षयपात्रमहमपहरेयमिति तन्निगूहसे । किं प्राकृतजनवत् त्वमपि मां चोरं गणयसि ।

**द्रौपदी** — विशीर्यते मे प्रज्ञा । प्रमुह्यति मे चेतना । अवसीदन्ति मे गात्राणि । नावबुध्ये ते सङ्कल्पम् । त्वमेवाद्यापूर्वः कृष्णो मे प्रतिभासि । नार्तामार्तिकारणं पृच्छसि । न मे कृच्छ्राणां प्रतीकारान्वेषणे प्रवणतां विवृणोषि । अयि पाण्डवजीवातो । किं बहुना,

यः पोषयत्युदरसद्मनि सन्निवेश्य
लोकत्रयं स समवाप्तसमस्तकामः ।
खिन्नाशयां कतिपयर्षिकुलार्हणायां
हा मां समेत्य, किमयं प्रणयोपहासः ॥ ११ ॥

अलं परीक्षाकार्कश्येन । न हि न जानीषे सहस्रशिष्यपरिवृतं भिक्षादोहदेनेहोपस्थितं महामुनिं दुर्वाससम् । अन्यच्च, त एव खलु पापा मां आर्यपुत्राणामशुभानि भाषमाणाः पर्यवारयन्नचिरादिहैव । इदमित्थमित्यजानाना परितप्ये । ईदृशीं मामुपगतोऽपि किं नाश्वासयसि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृष्णः** — कृष्णे, किं बुभुक्षितस्य लोकवार्तया। यावल्लघुरपि मे बुभुक्षाप्रतीकारो न क्रियेत तावत् शृण्वन्नपि न शृणोमि। पश्यन्नपि न पश्यामि। जानन्नपि न जानामि। मुग्धः खलु दुर्वासाः। या न मामेकं भोजयितुमीष्टे तस्यां यस्सशिष्यस्यात्मनो बुभुक्षाप्रतीकारं प्रति सप्रतीक्षः। अयि पाण्डवधर्मपत्नि, अन्नमयमिवाद्य लोकं पश्यामि। आघूर्णेते मेऽक्षिणी। गडगडायेते मे जङ्घे। किन्न मे शाकलेशमपि वितरिष्यसि।

**द्रौपदी** — कृपणाऽस्मि खलु। न रात्र्यामक्षयपात्रस्यानुभावोपलब्धिः। यद्यणुमात्रस्याप्यशितव्यस्येदानीं प्रभवामि, शपामि ते सर्वमङ्गलाकरेण पादपङ्कजयुगलेन।

**कृष्णः** — कृष्णे, मा तावत्। उपनय मे तत्पात्रम्। (पात्रमादाय) किन्तु पुलाकमात्रमपि नावशिष्यते। पश्यामि तावत्। (परीक्ष्य) प्रसीद, प्रसीद, पाञ्चालि, किमेतत्पश्यसि। बुभुक्षितस्यैतावन्मात्रमप्यन्नकूटं भवति। देह्याचमनीयोदकम्। अथवा तिष्ठ (आचम्य प्राश्य च) (स्वगतम्) अनेन विश्वात्मा भगवान् नारायणः प्रीयताम् (प्रकाशम्) द्रौपदि, बुभुक्षा नाम प्राणिनां महती पिशाचिका। तथा हि,

विषादयति गात्राणि व्याघूर्णयति चेतनाम्।
लङ्घयत्यखिलां वेलामापद्धर्मप्रवर्तनात्॥ १२॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शनैः प्रत्युपचीयन्ते मे प्राणाः। गृह्णन्ति च पाटवमिन्द्रियाणि। ब्रूहि, कृष्णे, किं वक्तुकामासि।

(नेपथ्ये)

हन्त भोः, धर्मपक्षपातिनः सानुक्रोशा मनस्विनः! परित्रायध्वम् परित्रायध्वम्। हा, हा, महाराज, ईदृशमप्यवस्थान्तरं सानुजस्य ते प्रेक्षणीयमासीत् युष्मद्भाग्यानुवर्तिनामस्माकम्।

**द्रौपदी** — हा आर्यपुत्र, किं तवाप्यासीदवस्थान्तरम्। कृष्ण, कृष्ण, एतदेवास्मि वक्तुकामा। यत्परिमुषितास्मि मन्दभाग्या। हा मे प्राणेश्वराः, भीमार्जुननकुलाः, किमेकपदे वः प्रियपरिचारिणीं व्युदस्य प्रस्थिताः स्थ। माधव, नूनमिदमनिष्टं मत्तो निगूहितुमेव इयतीं मायां त्वमाश्रितवान्। हा आर्यपुत्राः, हा, हतास्मि (इति मुह्यति।)

**कृष्णः** — (स्वगतम्) दुर्योधनानुचराणामयमाक्रन्दः। (प्रकाशं) कृष्णे, किमस्थाने शोकावेगमनुभवसि। कुशलिनस्ते भर्तारः।

(नेपथ्ये)

सहदेव, कुत्रास्ते मे प्राणसखी।

**कृष्णः** — दिष्ट्या प्रत्यासीदति भीमसेनः। तेन हि सुघटितमेतत्। उपह्वरे तावत्तिष्ठामि। (इत्यन्तर्धत्ते)

**द्रौपदी** — हा आर्यपुत्र, हिडिम्बाकामुक, त्वमपि खलु—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(प्रविश्य)

भीमसेनः — प्रिये, निष्ठुरमधिक्षिप्तोऽस्मि । हन्त किमिदानीमवस्थान्तरं वर्तते । प्राणदयिते, समाश्वसिहि । समाश्वसिहि । किं नन्दितव्ये प्रमुह्यसि ।

तव खलु सुमुखि प्रियाणि कर्तुं
धनदसरः प्रतिगम्य गन्धशैले ।
कृतविविधरणः प्रसह्य दिव्या-
न्ययि समुपाहरमम्बुजान्यमूनि ॥ १३ ॥

(इत्यवाकिरति ।)

द्रौपदी — (चक्षुषी उन्मील्य) हा माधव, किं न मामप्युपहरसि तस्मै महाजगराय ।

भीमसेनः — अयि अकाण्डपरिदेविनि, अयमहमजगरान्मुक्तस्ते पार्श्ववर्ती ।

द्रौपदी — कथं मे नाथो भीमसेनः । न चात्र कृष्णः । किमयं स्वप्नः उत परमार्थः । नाथ, इमानि तानि सौगन्धिकानि । अयि, कच्चिन्नातिपरिक्लेशितोऽसि कठिनहृदयायाः पाञ्चाल्याः कारणात् । कच्चित्कुशलिनस्ते भ्रातरः ?

भीमसेनः — याज्ञसेनि, किमत्रैव कृष्णोऽपि ।

द्रौपदी — नाथ, निरन्तरव्यामोहमुग्धान्तरङ्गां मां प्रत्यवपत्तु-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मित्रोपस्थितः — 'कृष्णे - बुभुक्षितोऽस्मि' इति कामपि मायां प्रस्तुवन् अक्षयपात्रे क्वचिल्लग्नमिषीकयाऽप्यनुत्थापनीयं पुलाकपरमाणुं प्राश्य निवृत्ताशनायं स्वं प्रत्यपादयत् । ततश्चास्मदाप्तवर्गाणां आक्रन्दश्रवणेन प्रमुग्धायां मयि —

**भीमसेनः** — प्रिये, न खल्वस्मदाप्तवर्गाणामभूदाक्रन्दः । सत्यमविचार्य शोचितं भवत्या ।

**द्रौपदी** — तेन हि कीदृशमेतत । कुत्र ते धर्मवत्सलः पूज्यः? कीदृशास्तेऽनुजन्मानः ?

(प्रविश्य)

**सहदेवः** — आर्य भीमसेन, आर्यस्तावत्करुणमाक्रन्दतस्सुयोधनानुचरान् अभयेनानुगृह्य गन्धर्वैर्बलादाह्रियमाणं सावरोधबान्धवानुचरं कुरुराजं प्रत्यवपत्तुं प्रस्थितः । भवन्तं महर्षेर्दुर्वाससस्सत्कारकर्मणि नियुङ्क्ते ।

**द्रौपदी** — (स्वगतम्) किं गन्धर्वैस्तदानीं ममोपकृतम । किं स्वकर्मणो दुर्विपाकं लम्भिता अनार्याः । अद्य समुच्छ्वसिमि ।

**भीमसेनः** — किं धार्तराष्ट्रान् विमोचयितुं प्रस्थितः आर्यः । कष्टम् । अरण्यवासेन निर्वाणप्रायं क्षात्रं तेजो वः पूज्यस्य । भद्रे, समाश्वसिहि, कुशलं ते भ्रातृवर्गस्य शरीरावयवेषु । न तु पुनः पूर्वाभ्यस्तेषु सत्वावष्टम्भादिषु शौर्यगुणेषु । अहो बत, परा काष्ठेयं क्लीबतायाः । अयं खलु घृणी पाण्डवाग्रजः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

य आदावस्मत्तश्च्छलमनुविशन्राज्यमहरत्
य आरम्भैर्नित्यं निकृतिपरमैरर्दयति नः ।
य आराद्न्वैच्छत् द्रुपदतनयायामविनयं
स कैश्चित्स्वच्छन्दान्निगडित इति क्लेशमयते ॥ १४ ॥

अहह,

तदा द्यूतच्छद्मन्यनुमितमवाक्कर्मणि गुरौ
स्फुटोद्भेदं राज्ञां सदसि निजदाराम्बरहृतौ ।
प्रतिष्ठामारूढं मखवरमनुष्ठास्यति रिपा-
विदानीं क्लीवत्वं रिपुषु घृणिनः कम्पयति नः ॥

सहदेव, ब्रूहि मद्वचनादार्यम् ।

अशरणा इति चेद्विधिरन्तरा परकरेण विहिंसति वो रिपून् ।
उपकृतं तदयाचितमप्यहो न बत वित्थ घृणित्वविडम्बिताः ॥

अथवा, अयि सुक्षत्रिये, एह्येहि, नवनीतहृदयस्यार्यस्य निवेदयात्मनो दुर्भरं हृदयखेदम् ।

कुम्भदासीव यैरद्य निर्मर्यादं प्रधर्षिता ।
तानेव दयते भर्ता न त्वामीदृशभागिनीम् ॥ १७ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सहदेवः** — आर्य, आनृशंस्यं प्रशंसति धर्मवत्सलः । कुतोऽत्र खिद्यते भवान् । अपि च,

विभवदृप्ततया स्पृहयन्हि नः
परिभवं स परैः परिभावितः ।
स्वयमगाद्यदि नो दयनीयतां
न किमुदारतयेह समिध्यते ॥ १८ ॥

पुनरिदमप्यार्यश्चेतयतु ।

कामं कृतापराधेऽपि सांप्रतं शरणार्थिनि ।
बाह्येन परिभूतेऽस्मिन् शौर्यं स्यान्नु नृशंसता ॥ १९ ॥

**भीमसेनः** — सहदेव, निस्संशयं साधुदर्शी भवान् । कष्टमपराद्धं मया गुरुजने पारुष्यभाजा ।

येनैव धर्मगतिदर्शननैपुणेन
सोऽमूमुचन्नहुषवाहससंशयान्माम् ।
तेनैव जानाति गुणाननृशंसभावे
खिद्ये महात्मनि मितंपचधीरधीरः ॥ २० ॥?

तेन हि, सहदेव, किमादिशति मां गुरुः ।

**सहदेवः** —

उपस्थितो महानेष निग्रहोऽनुग्रहोऽथ वा ।
दुर्वाससि प्रमाद्यं तन्न त्वया न च कृष्णया ॥ २१ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भीमसेनः** — उच्यतामार्यः ।

फलं मूलं कन्दं पिशितमथवा यत्तु सुलभं
महावात्यावेगप्रचलितभुजस्येह विपिने ।
तदारादाराध्यप्रथमगणनीयस्य हि मुनेः
सशिष्यानीकस्य भुवमुपनिधास्याम्यहमिति ॥ २२ ॥

**सहदेवः** — तथा । (इति निष्क्रान्तः ।)

**द्रौपदी** — नाथ, दुराराध्यः खलु स मुनिः श्रूयते । स किं कन्दमूलफलैरुपच्छन्द्यते ।

**भीमसेनः** — अथ कोऽन्यो हस्तगत उपायः ।

**द्रौपदी** — स भगवान् रुक्मिणीवल्लभ एव ।

(नेपथ्ये)

अयि पाण्डवधर्मपत्नि,

भुक्त्वा पुलाकपरमाणुमणूदरि त्वद्-
भूत्यै निजोदरधृताखिलसृष्टिपिण्डः ।
गोपच्छलेन विहरन् भुवि पद्मनाभो
नासाग्रपूरमवशान् समपूरयन्नः ॥ २३ ॥

वद्विस्रब्धा भव । श्रेयांसि द्रक्ष्यसि । अपि च,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्दुर्मतिरुपानैषीन्मां स्वदुर्मन्त्रमित्रताम् ।
न चिरं धार्तराष्ट्रोऽसौ नन्दिष्यति सबान्धवः ॥ २४ ॥

**भीमसेनः** — एष भगवान् दुर्वासाः प्रसन्नोऽस्मानभिवर्धयति ।

**द्रौपदी** — दिष्ट्या, दिष्ट्या । नमो माहेश्वराय महामुनये । अहो मायाविता माधवस्य । य एवं दृष्टनष्टः परिणामेन प्रत्ययनोयसन्निधानः ।

**भीमसेनः** — देवि अद्यान्यदपि परिणामकुशलं संवृत्तम् । अहो! निर्भरमस्मि ह्लादभरितः यदस्मिन्नवस्थासन्निवेशे कृष्णं प्रेक्षिष्य इति।

**द्रौपदी** — नाथ ब्रूहि तावत् । कथमजगरादार्येण त्वं मोचित इति । तदा तेन दुरात्मना प्रकाशितेऽस्मिन्वृत्तान्ते न मे प्रत्यय आसीत् । स खल्वार्यफाल्गुनमजगरीभूतमाचख्यौ ।

**भीमसेनः** — प्रिये, तमेव वृत्तान्तं वक्तुमुपक्रान्तं मया । पुरा नहुषो नामास्मत्कुलपूर्वपुरुषश्शताश्वमेधकर्ता स्वर्गं गतो दर्पाद्देवर्षीणामपराद्धश्शापेनाजगरीभूय हिमवद्गह्वरेषु बहूनि संवत्सरसहस्राणि दुःखेनायापयत् । स मां कुबेरनगरान्निवर्तमानमासादयामास । आर्यस्तस्य धर्मप्रश्नानां निश्चयमुक्त्वा न केवलं तस्मान्माममोचयत्, तमपि शापादमोचयत् । अथ स दिव्यं वपुः प्रतिपद्य अस्मांश्चानुगृह्य स्वर्गमारुरोह ।

**द्रौपदी** — अथ कथमेष प्रवादो जातः आर्यः फाल्गुनः अजगरीभूतश्शच्याश्शापादिति ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भीमसेनः** — नूनं कस्यचित्कपटतापसस्य दुर्योधनपक्षपातिनो दुश्चेष्टितं तत् ।

( नेपथ्ये )

भो भोः अतिथिपरिभाविनः, पाण्डुकुलपांसनाः किं भिक्षयाऽस्मानामन्त्र्य सुचिरेणाप्येवमुपेक्षितुं युक्तम् ।

अस्तीत्यतिथिमाहूय गृहद्वारि प्रतीक्षया ।
चिरमायासयेद्योऽसौ नरकान्नोत्तरिष्यति ॥ २५ ॥

तदयं वोऽस्मद्गुरोः पाश्चिम आदेशः ।

अनुच्छिष्टं विचित्रान्नं सतीहस्तोपकल्पितम् ।
दुर्वासा नाचिराद्भुङ्क्ते न च यूयं भविष्यथ ॥ २६ ॥

**द्रौपदी** — नाथ, किमेतद्विपरीतं वर्तते । अथवा, किमसौ स एव दुष्टतापसो भवेत् , य आर्यमलीकोत्पातपैशुन्येनाकदर्थयत् ।

**भीमसेनः** — प्रिये, पश्यामि तावत् । प्रतिपालय मामाश्रमपद एव क्षणमात्रम् । (उच्चैः) प्रसीद, प्रसीद, भगवन् । अयमहमागत एव ते सत्कारधूर्वहः ( इति गदां स्कन्धे अधिरोपयति । )

( उभौ निष्क्रान्तौ । )

इति षष्ठोऽङ्कः ॥

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ सप्तमोऽङ्कः ॥

---

( ततः प्रविशत्युत्सुको विकालः )

विकालः — आदिष्टोऽस्मि कौरवप्रियचिकीर्षया प्रवर्तितमहामाहेश्वराध्वरकर्मठेन पातालनिवासेना दानवसङ्घेन, यत् उपलभ्यतां प्रागेव कुरुराजेन मैत्रीमासूत्रयितुं प्रेषितस्य अद्यावधि अनुपलभ्यमानप्रवृत्तेर्जटासुरस्येदृशतादृशत्वमिति । अधिगतश्चासौ मया महात्मा स्वामिकार्ये तृणीकृतजीवितः बहुरूपैश्छलैरराति-मध्ये व्यवहरन् अन्ततः मत्प्रत्यक्षमेवास्मत्कुलकृतान्तस्य भीमसेनस्य भुजयन्त्रनिपीडनेन म्रियमाणः । अन्योऽप्येष मर्मविदारणस्सन्दर्भः पुरस्तादेव ।

एते कौरवपुङ्गवाः नियमिताः केशैर्दुकूलैश्च वा
वैरिस्यन्दनकूबरेषु नयनैस्तिष्ठन्ति बद्धाश्रुभिः ।
आर्तानामवनोचिताः परपरामर्शादमूर्दूषिता
लज्जन्ते च विकीर्णकातरदृशो द्रष्टुं निजप्रेयसीः ॥ १ ॥

कर्णमधिकृत्य चैवमालापो दुर्योधनशिबिररक्षिणां मयोपश्रुतः । यथा, तमर्जुनवधार्थमुपारूढभीषणप्रतिज्ञमुपलभ्य शक्रः कपट-भूसुरवेषेण याचक इवोपसृत्य तस्य निसर्गसिद्धं कवचं कुण्डले

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चापजहारेति। स च कुरुराजाज्ञया चिरादन्विष्यमाणोऽपि नोपलभ्यत इति महदेतत् शङ्कास्थानम्। किं ह्रिया कन्दरान्तर्निलिल्ये। उत तपस्तप्तुं परागतः। एते खलु जितकाशिनो महोद्यमास्ससुहृदो धार्तराष्ट्राः सर्वतो भग्नानामस्माकमाशंसा-वीरुधः किमप्युपन्नायन्त इति स्वामिपादैरुल्लिखिता मनोरथाः। हन्त भोः, महानेष दानवानां दानवसुहृदां च करालः कालो वर्तते।

उपायं यं यमास्थाय निजोद्धारो विचिन्त्यते।
तं तमेव कृतान्तोऽस्मान् द्वारीकृत्य निकृन्तति ॥ २ ॥

पाण्डवानां कौरवाणां च वैरे जाते कुत एते दिवौकसः पक्षान्तरपरिग्रहेणास्मानाकुलयन्ति। तैरनुभाविताः किल पाण्डवाः आसुरवंश्यानां कृतान्ता जायन्ते। अत्र प्रतीकारमन्वेषयद्भिः यदि कौरवपक्षोऽस्माभिः स्वीकृतः तत्र दैवहतको न मृष्यति। एवं गते मन्दभागानां नः कालपर्यये दानवान्वयबीजाङ्कुरो-ऽप्यवशिष्येतेति न विपुला प्रत्याशा। न तावत् ज्ञायते कीदृशी परिपूर्तिर्भविष्यत्यस्य दुर्योधनाभ्युदयहेतोः प्रवर्तितस्य महायज्ञस्येति। अत्र च दुर्वासा नः परमप्रत्यूहः। येनासौ माहेश्वरो मुनिः सुपरीक्षितभक्तिगुणमपि दुर्योधनं स्वल्पकारणेनैवाद्याशपत्—'न चिरं धार्तराष्ट्रोऽसौ नन्दिष्यति सबान्धवः' इति। तस्मिन्खलु प्रणयपेशलो भर्गः नित्यानुकम्पार्द्रा भवानी चेति श्रूयते। कष्टम-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुखसञ्चारा दानवानामद्य सिद्धिसरणिः । भवतु तावत् । यथाधिगतममुं वृत्तान्तजातमचिरेण स्वामिपादेभ्यो निवेदयामि ।

(इति निष्क्रान्तः ।)

॥ विष्कम्भः ॥

( ततः प्रविशन्ति चित्ररथार्जुनाभिमन्यवो मातलिश्च । )

**चित्ररथः --**

जित्वा कौरववाहिनीं नियमितान्दुर्योधनादीन्हर-

न्नुत्तीर्णस्समराङ्गणादविरतं प्रेक्ष्येषुवर्षं पुनः ।

प्रत्युद्युज्य मनागथ प्रवणयन्नुच्चावचं पौरुषं

मायामप्यवलम्ब्य खण्डितगतिः क्रोधाद्गदामाददे ॥

**अर्जुनः** — ततस्ततः ।

**चित्ररथः** —

ममाभिपततो गदां व्यधमदात्मजस्ते शरै-

रतिष्ठमहमक्रियस्स च विवृद्धमन्युः पुरः ।

शरप्रकरदुर्दिने व्यपगते तदानीममुं

निशाम्य सुहृदस्सुतं समभिपत्य पर्यष्वजे ॥ २॥

**अभिमन्युः** -- ( चित्ररथं सावज्ञमवलोकयति । )

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**चित्ररथः** -- ( सस्मितम् )

समरोपग्रहा नैते कौरवा मम तुष्टये ।
आलिङ्ग्यैव गृहीतोऽयं यथा ते विक्रमी सुतः ॥ ३ ॥

**अभिमन्युः** -- ( सासूयम् ) किं मां गृहीतमभिधत्ते भवान् ।

युद्धेऽपहस्तितानामपक्रमायाप्यलब्धमार्गाणाम् ।
यः प्रणिपातस्सवयसि जेतरि सोऽयं शिशावुपश्लेषः ॥

**मातलिः** — उदात्तगम्भीरो व्याहारः ।

**अर्जुनः** -- वत्स, पूज्यः खलु ते, त्वयि प्रणयोर्मिलो मम च भरतशिक्षागुरुस्तत्रभवान् महेन्द्रमित्रं चित्ररथः ।

**चित्ररथः** — वत्स, बाढमभ्युपपद्यते निग्रहः । अथ विशेषोऽप्यस्ति ।

सञ्चूर्णितगदेनादौ ततः प्रेमनिबन्धिना ।
युक्तवागङ्कुशेनाद्य त्वहं खलु निर्जितः ॥ ५ ॥

तदपराजित, कीदृशमद्य त्वया मय्यनुशासनमिष्यते ।

**अभिमन्युः** —

पूज्यस्तातस्य स भवान् युद्धावजितनिष्क्रयम् ।
नान्यमिच्छामि भवतो विना कौरवमोक्षणम् ॥ ६ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मातलिः** — अनवद्योऽभिसन्धिः ।

**अर्जुनः** — अभिजातं मन्त्रितं वत्सेन । वयस्य, चित्ररथ, यावदार्यो नाधिगच्छत्येनां कुलजनस्यावमाननां तावदेव विमुच्यन्तामेते वराकास्सुयोधनादयः ।

**मातलिः** — न केवलमाकृतिसंवादः, शीलसंवादोऽपि जनकतनूजयोः ।

**चित्ररथः** — सखे, वत्स, नाहमस्मिन्विषये स्वतन्त्रः ।

यतः —

शासनेन महेन्द्रस्य दुरात्मानो मया ह्यमी ।
निगृहीता न मोक्तव्या ऋते तत्प्रतिशासनात् ॥ ७ ॥

**अभिमन्युः** — तेन हि,

युद्धे विजयिनो युक्तमेवमेतत्प्रभाषितुम् ।
नाधुना प्रग्रहैस्सर्वैस्स भवानेव मे वशे ॥ ८ ॥

यद्यात्मा भवता मत्तो मोचयितव्यः तदा मम चाभिसन्धिः सम्भावनीयः ।

**मातलिः** — अहो सावष्टम्भता बालस्याप्यबालसत्वस्य वत्सस्य ।

**चित्ररथः** — इतः स्वामिनिदेशः । इतो युद्धावजितनिष्क्रयः । अत्र स्वामिनिदेशो मे बलवान्भाति । उपकल्पयतु वत्सो ममापरं निष्क्रयम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अभिमन्युः** — न तच्छक्यम् ।

**चित्ररथः** -- तेन हि कथमिदानीम् ।

**अभिमन्युः** -- यदि भवान् न मोचयति अहमेव मे बान्धवानिदानीं मोचयिष्यामि ।

**अर्जुनः** — वत्स, अलं साहसेन । युक्तमेवाह गन्धर्वराजः । महत्यस्मिन्नधिकारविवादे कोऽपि प्रतिभूः क्रियताम् ।

**चित्ररथः** -- ननु द्रष्टव्य एव मे पुण्यश्लोको धर्मनन्दनः । दृष्टाखिलधर्मनिर्णयस्स एवात्र नौ प्राश्निको भवतु ।

**अभिमन्युः** -- उदारः कल्पः ।

**अर्जुनः** — (जनान्तिकम्) मातले, प्रभवतोऽत्र याथातथ्येनाभिसन्धिरवधार्यताम् ।

**मातलिः** -- (जनान्तिकम्) तथा । (प्रकाशम्) गन्धर्वराज, निवर्ते किल ।

**चित्ररथः** -- तथा भवतु । मातले, निवेद्यतां पाकशासनाय, अचिरात् चित्ररथः समग्रान् समरोपग्रहानानयतीति ।

**मातलिः** -- बाढम् । (इति निष्क्रान्तः ।)

**चित्ररथः** — सखे, सविवादवस्तुकः खल्वभियोगः कार्यः । तदानाययामि सर्वानुपग्रहान् धर्मसूनोरन्तिकम् ।

(इति निष्क्रान्तः)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अर्जुनः — वत्स, द्वारकातः केनेदानीमिमां भूमिमानीतोऽभवः ।

अभिमन्युः -- अवरमातुलेन ।

अर्जुनः -- किं कृष्णोऽप्यत्र ?

अभिमन्युः -- स मां समरदर्शनकौतुकिनं रथेनैव विसृज्य प्रथममेवाश्रमपदं प्रविष्टः ।

अर्जुनः -- एहि, वत्स, गुरुजनं द्रक्ष्यसि ।

(इत्युभौ परिक्रामतः ।)

(ततः प्रविशन्ति युधिष्ठिरो नकुलसहदेवौ दुर्योधनभटाश्च)

युधिष्ठिरः — भोस्सुयोधनानुयायिनः, किं ब्रूथ,

वंशे विधोर्नहुषपूरुकुरुप्रतीप-
मुख्याभिधानगणनाकलितप्रतिष्ठे ।
दुर्योधनो गृहजनैस्सह गायनाना-
माजौ गतो ग्रहणमित्यतिशोच्यमेतत् ॥ ९ ॥

मुख्यभटः — महाराज, किमनिश्चितमीदृशमर्थं भवतां पुरस्तादभिदध्मः ।

आसीद्युद्धं दृढमधिकृतं वाजिवक्त्रैरकाण्डे
स्वैरं स्रोतस्तटविहरणासक्तचित्तेन राज्ञा ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सङ्ख्ये भग्नः पशुरिव स चाकृष्यते सावरोधः
सौभद्रेयोऽप्यनलमथ तान् सांयुगीनो विनेतुम् ॥

**युधिष्ठिरः**—कथं वत्सोऽभिमन्युरप्यत्र ?

**मुख्यभटः**—न जानीमः कुतः कथं वोपागत इति ।
निगृह्यमाणेष्वस्मत्स्वामिषु स प्रचण्डे परावमर्दकर्मणि व्यापृतो दृष्टः ।

**युधिष्ठिरः**—साधु वत्स, साधु, बालोऽपि त्वं गुणवृद्धानां पुरोगः । तदादिशत मे मार्गम् । वत्सदर्शनोत्सुकोऽस्मि । सहदेव, वटषण्डावतारं गत्वा महर्षेर्दुर्वाससः प्रवृत्तिमुपलभस्व । नकुल, त्वमपि, याज्ञसेनीभीमसेनयोः पार्श्ववर्ती भवन्नुपहर भिक्षोपकरणानि ।

**नकुलसहदेवौ**—तथा (इति निष्क्रान्तौ)

**युधिष्ठिरः**—भोस्सुहृदः, किं वत्सो मे नावसीदति विषमेऽस्मिन् गन्धर्वयुद्धे ? (सर्वे परिक्रामन्ति)

**अर्जुनः**—वत्स, अयमार्यः स्वयमेवोपागतः । तदुपसर्पावः ।
(उपसृत्य) जयत्वार्यः । अयं विधेयो विजयोऽभिवादयते ।

**अभिमन्युः**—तात, सौभद्रेयोऽहमभिवादये ।

**धर्मपुत्रः**—हन्त, कथं युगपदेव मे वत्सौ । आलिङ्गतं मे चिरविश्लेषपरितापदग्धान्यङ्गकानि । फाल्गुन, किमसुरामर्दात्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कुशली त्वं निवृत्तः । कच्चिदनुग्राह्योऽभवः पाकशासनस्य । वत्साभिमन्यो, कच्चिदनतिक्लिष्टोऽसि गन्धर्वाभियोगसाहसेन ।

(प्रविश्य)

**चित्ररथः** — विजयतां निर्व्याजधर्मव्यपाश्रयो धर्मसूनुः । न केवलं वत्सो नातिक्लिष्टो युद्धे परं तु विजयी । एषोऽस्मि तत्पराजितस्समरोपग्रहः ।

**युधिष्ठिरः** — अर्जुन, कथमेतत् ।

**अर्जुनः** — एष महामनस्वी चित्ररथो नाम गन्धर्वराजः मघवन्निदेशादिहागतः वत्सोपलालनप्रणयादेवं वक्ति । मोचयति किल दुर्योधनादीन्वत्सः कार्यव्यतिक्रमेण ।

**युधिष्ठिरः** — अयि गन्धर्वराज, मानितोऽस्मि भवत्समागमेन । अस्तु नामायं वत्सोदाहृतः प्रतिपणः । के वयं युष्मासु कार्यविनिमयेन व्यवहर्तुम । तत्प्रसीद सखे अस्मद्बान्धवमोक्षं कर्तुम् । अर्जुन, किं न ते सखा त्वयाऽनुनीयते ।

**अर्जुनः** — अनुनीत एव मया गन्धर्वराजः । न च न प्रसन्नः । किन्त्वस्वतन्त्रमात्मानं वेत्ति ।

(नेपथ्ये)

**दुर्योधनः** — हा कृतान्त, किं ममाभिमाने निष्करुणो भूत्वा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राणेषु केवलं दयसे । इदमेव कल्याणमिदानीं यद्युदितं सूर्य-मनुभूतेदृशपरिभवो न द्रक्ष्यामि ।

**युधिष्ठिरः** — ( नेपथ्याभिमुखमवलोक्य सवैलक्ष्यं सहसा मुखं परावर्तमानः ) सखे, गन्धर्वराज, व्यसनगतं बन्धुजनं नालोकयितुं शक्नोमि । तद्यावन्न मोचितास्तावन्नेहानीयन्ताममी ।

**अभिमन्युः** — ( स्वगतम् ) किमद्याप्ययनेन साम्नैव व्यवहरत्यार्यः । किमहं सहसा न मोचयाम्यनीदृशपरिभवार्हं मे बान्धवजनम् ।

**चित्ररथः** — ( नेपथ्याभिमुखमवलोक्य ) गान्धारप्रिय, सुमध्यम, षड्जनिधे, मा तावदानयतोपप्रहान् । तत्रैव ते तिष्ठन्तु । राजन्, इदं भवतः परिपृच्छामि । किमीदृशेषु पापात्मस्वपि सापेक्षता गुणो नाम भवति ।

द्रौपद्या वसनविकर्षिणोऽनुजस्य
प्रत्यक्षं पतिसमितेः पुरो गुरूणाम् ।
ऊरुं स्वं दृढमभिहत्य साधुवादं
चक्रे यस्तमिह निरीक्ष्य दूयसे किम् ।। ११ ।।

**युधिष्ठिरः** — न हि पापकारिणमुद्दिश्य पापकारिभिरेवास्माभिर्भवितव्यम् । नैसर्गिकं स्वभावं नातिवर्तितुं क्षमन्ते देहिनः । स भवान् घृणाया अधिकारे प्राप्ते निकृत्युपदेशेन मां विस्माययति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**चित्ररथः** — राजन्,

त्वामप्राप्यगुणोत्कर्षं मनसाऽपि सुरोत्तमैः ।
विषमस्थमुपैत्स्वस्थो दुर्मतिः प्रेक्ष्य नन्दितुम् ॥ १२ ॥

**युधिष्ठिरः** — आस्तां नाम । किमतो नः फलितं गलितं वा ।

**चित्ररथः** —

संराजं त्वामवज्ञाय बुभूषुरकरोन्मतिम् ।
राजसूये प्रतिस्पर्धासंरम्भकलुषीकृतः ॥ १३ ॥

**युधिष्ठिरः** — अवितथम् ।

**चित्ररथः** —

दैत्यदूतेन संमन्त्र्य निर्लज्जोऽयमरोचयत् ।
शङ्कितः फाल्गुनान्मिथ्याप्रपञ्चैः कदनं हि वः ॥ १४ ॥

**युधिष्ठिरः** — भवितव्यम् ।

**चित्ररथः** —

कैतवेन विकृष्टायाः पापाचारैर्हि मार्गते ।
मूढो विषमसंस्थायाः श्रियो गाढावसज्जनम् ॥ १५ ॥

**युधिष्ठिरः** — अयमस्माकमुदासीनो विषयो विमर्शस्य ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्ररथः —

यूथभ्रष्टामिव मृगवधूं संहतास्सारमेयाः
पर्यावृत्य द्रुपदतनयां दारुणा धार्तराष्ट्राः ।
एते दुश्शासनमनुगता अप्रियं व्याहरन्तो
मुक्ताक्रन्दां सिचयमवलम्ब्योदगृह्णन्निहैव ॥ १६ ॥

युधिष्ठिरः — तदेतदनार्याचरणं श्रुतमस्माभिस्सहदेवमुखात् ।

दुर्योधनः — ( यवनिकान्तरे स्वगतम् )

एतानि पूर्वाचरितानि दर्पान्निराकृतस्यैव पुरो विपक्षैः ।
भङ्गे प्रसक्ते मम कीर्तितानि वाक्ये च वाक्ये दलयन्ति मर्म ॥

चित्ररथः — सर्वेष्वेषु दुराचारस्य दुश्चेष्टितेषु क्षाम्यति भवान् । परन्तु, न मघवा शक्नोत्युपेक्षितुमीदृशान्व्यतिक्रमान् । यतः स्वजनप्रतिपत्तिर्युष्मासु देवस्य ।

अलं प्रत्यवपन्नो हि भर्गानुग्रहभागिना ।
तवानुजेन देवेन्द्रो महतो दानवार्दनात् ॥ १८ ॥

युधिष्ठिरः — सफलमिदानीं मध्यमस्य पाण्डुसूनोर्जन्म प्राप्तितवेतनश्चासौ धनुर्वेदपरिश्रमस्य । अभ्युदितप्रकाशं नः कुलम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्ररथः —

विगीतविविधारम्भं राजसूयाभिकाङ्क्षिणम् ।
मृष्यतस्तव गुप्त्यर्थी शासितुं प्रैषयत्स माम् ॥ १९ ॥

युधिष्ठिरः — अनुगृहीतोऽस्मि । तस्य चाविनयबहुलचेष्टितस्य जीवग्राहं ग्रहणेन भवताऽद्य किलानुरूपो दण्डो विहितः । तदिदानीमस्य मोक्षणमेव प्राप्तकालं पश्यामि ।

दुर्योधनः — ( यवनिकान्तरे स्वगतम् ) अयि भोः, धर्मसूनो, यद्यवितथमेव मामनुकम्पसे न मामद्य मोचयितुमर्हसि ।

समक्षं नारीणां रिपुभिरहमादौ निगडितः
स्वदोषैर्ज्ञातीनां धुरि समभियुक्तोऽथ विवृतैः ।
इतीयं पर्याप्ता मम मरणवीप्सा न किमहो
मृतिर्मोक्षप्राप्त्या कति भवतु वारान् मम पुनः ॥

युधिष्ठिरः — अपि च भोः, गन्धर्वराज, श्रूयतामचला मे धर्मप्रतीतिः ।

कुलमानधना नित्यमन्तस्सकलहा अपि ।
न मर्षयन्ति बाह्येन स्वजनस्य प्रधर्षणम् ॥ २१ ॥

परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम् ।
परस्परविरोधे तु वयं पञ्चैव ते शतम् ॥ २२ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दुर्योधनः** — ( यवनिकान्तरे स्वगतम् )

युद्धे गन्धर्वनिहतस्याभविष्यद्यशो मम ।
द्विष्टस्यैवानृशंस्येन रोचये जीवितं कथम् ॥ २३ ॥

**चित्ररथः** — एवमनवद्यो वः पक्षः । कथं पुनर्मोचयिष्यति भवान् ?

**युधिष्ठिरः** — भवन्तमनुनीय ।

**चित्ररथः** — न मामनुनीय कार्यमस्ति ।

**युधिष्ठिरः** — अथ कोऽन्यस्तावदनुनेतव्यः ?

**चित्ररथः** — यो मे प्रभुः । यस्य चाज्ञानिर्वाहिणैव मयाऽमी निगृहीताः ।

**दुर्योधनः** — ( यवनिकान्तरे स्वगतम् ) एष विवाद एव मर्मघट्टनः ।

**अर्जुनः** — आर्य प्रागेव प्रेषितो मया मातलिः महेन्द्रमस्मिन्नर्थेऽनुनेतुम् । न मे प्रणयं विहनिष्यति सुरेश्वरः । तत्प्रतिपालयामो मातलिम् ।

**युधिष्ठिरः** — प्रियं नः । ( स्वगतम् ) किन्नु खलु वत्सश्चिरयति सहदेवः ।

(प्रविश्य)

**सहदेवः** — आर्य, परोक्षे दुर्वासाः कतिपये च तस्य शिष्य-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्गाः अतिभोजनेन विकृताकारा इव लक्ष्यमाणा अधिगताः । ते च न प्रतिभाषितुमपि शक्नुवन्ति ।

यतः—

मज्जन्तस्तोयमध्ये दैवतानां प्रणम्राः
भूपृष्ठे वेष्टमानास्ते च तेऽन्ये तथैव ।
दुःखेनैवोच्छ्वसन्तः खाद्यपेयादिमानां
जीवद्भाण्डायमाना नालमुत्थातुमेव ॥ २४ ॥

किञ्च,

हिक्कां ढक्कां काहलं छर्दिमेके तुन्दं भेरीं निर्भराक्रन्दमन्ये ।
जृम्भां शङ्खं घर्घरीं नासनालं केचिच्चान्ये शेरते वादयन्तः ॥

**युधिष्ठिरः** — अहो आश्चर्यम् । किमेतत् अस्मत्कुटुम्बिन्याः साध्वीचर्याफलम् ।

( प्रविश्य भीमनकुलपुरस्सरा )

**द्रौपदी** — जयत्वार्यपुत्रः । दिष्ट्या आर्यपुत्रं सानुजं कुशलभागिनमस्मिन्क्षणेऽभिवन्दितुं मां नाभ्यसूयन् दैवतानि ।

**अभिमन्युः** — तात, अम्ब, प्रणमामि ।

**द्रौपदीभीमौ** — ( आश्लिष्य ) वत्स, चिरञ्जीव ।



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भीमसेनः** — आर्य, कृष्णानुग्रहेण सविशेषमभितर्पितः पाञ्चाल्या सशिष्यगणो दुर्वासाः ।

**युधिष्ठिरः** — अहो नु खलु भोः ।

पुङ्खानुपुङ्खमेवैताः प्रवर्तन्ते शरीरिणाम् ।
विपदस्संपदो वाऽपि स्यूता इव परस्परम् ॥ २६ ॥

वत्स, कः प्रकारः ?

**भीमसेनः** —

विश्वात्मकत्वं प्रणिधाय नैजं कृष्णोऽर्कपात्रोल्लिखितं पुलाकम् ।
प्राशीत्सशिष्यस्य मुनेस्ततोऽभूद्यत्नादृते तुष्टिरभीष्टरूपा ॥

अन्यच्चैतत्,

पार्थस्य शापं प्रथयन्नलीकं योऽवञ्चयत्त्वां कृतविप्रवेषः ।
मुनेरपि क्रोधमुदाहरन्मां स दानवोऽहन्यत दुष्टशीलः ॥

**युधिष्ठिरः** — हन्त, व्यपगतो मे विविधश्चिन्ताज्वरः ईश्वराणामानुकूल्येन ।

**दुर्योधनः** — (यवनिकान्तरे स्वगतम्) अहो बत मे राशीभवन्त्यनिष्टानि ।

जटासुरः प्राणसखो विपन्नः कर्णो विषण्णः कवचापहारात् ।
विकारितस्सोऽपि मुनिर्विपक्षैर्युद्धे च बद्धोऽहमहो विपाकः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( प्रविश्य )

मातलिः — वर्धतां धर्मनन्दनः । आदिशति किल वृत्रहा ।

दासोऽहमस्मीति यदि ब्रवीति प्रत्यर्पयानीति च राज्यमन्ते ।
अराजसूयार्हमवैति च स्वं सुयोधनो मोक्षणमर्हतीति ॥ ३० ॥

पुनरिदमाह विडौजाः वत्सस्याभिमन्योरिदं प्रथमरणप्रवेशपरीक्षितपराक्रमस्य निरन्तरं मङ्गलमाशासानः ।

वत्सस्योपग्रहाश्चित्ररथस्तस्यापि कौरवाः ।
मोचयत्यभिमन्युस्तान् नाहं चित्ररथो न च ॥ ३१ ॥

प्राभृतैः स्वतनूजाय कर्णं प्रेष्याभियाचिताम् ।
प्रकल्पयतु कौरव्यो वत्सलामभिमन्यवे ॥ ३२ ॥

भीमसेनः — युक्तरूपमादिष्टं वासवेन । तेन हि वत्स एव गत्वा मोचयत्वेतान् ।

चित्ररथः — प्रथमः कल्पः । किन्तु वासवोपकल्पितानां समयानां प्रतिपत्तिं महाराजधर्मनन्दनाय प्रथमं स प्रकाशयतु । ( नेपथ्याभिमुखमवलोक्य ) अये गान्धारप्रिय, उपस्थापयात्र महाराजसन्निधौ धार्तराष्ट्रज्येष्ठम् ।

दुर्योधनः — ( नेपथ्ये स्वगतम् ) हा कृतान्त, दुर्व्यवसित, किं मां लज्जया स्वात्मन्येव निलीयमानं कोणे कोणेऽप्यन्विष्य घातयसि ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परा काष्ठेयं मे निकारदैन्यस्य यदभिमन्युर्मां मोचयति । यश्च मे महामनोरथानामवसानमुद्रया आत्मनिष्क्रयः प्रकल्प्यः । हा हा हतोऽस्मि मन्दभाग्यः ।

किमिह न विदीर्येत क्षिप्रं धरा मम कारणा-
न्न किमुडुगणप्रोता वा द्यौः पतेन्मम मस्तके ।
किमुत सहसा नोत्सर्पेन्मां दवो वलयीभवन्
कृतककरुणश्शत्रुर्यावन्न मामवपत्स्यते ।। ३३ ।।

परित्रायतां मां यद्यप्रगृहीतः कश्चिन्मे सुहृत् । हा कर्ण क्वासि भोः । हा मत्प्रतिश्रुतोद्वाहसंबन्ध बलभद्र, न हि मामीदृगवस्थं जानासि ।

( वत्सलया सह प्रविश्य )

बलभद्रः — कुत्र कुत्र मे सुहृद्दुर्योधनः ?

( नेपथ्ये महान् कलकलः )

हा हा महाराज, आश्चर्यमाश्चर्यम् ।

(प्रविश्य)

गान्धारप्रियः—राजन् केनाप्यतिभयंकरेण भूतेनापह्रियते कुरुराजः ।

दुर्योधनभटाः — परित्रायध्वं, परित्रायध्वं महाराजम् । हा हा हताः स्मः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बलभद्रः — आः क एष पापो मयि स्थिते कुरुराजमपहरति ।
(इति हलमाकर्षन् संभ्रममयते ।)

(प्रविश्य)

नारदः — विजयतां धर्मनन्दनः । बलभद्र, अलं संभ्रमेण । नीतो दुर्योधनः पातालवासिनां दानवानां यज्ञकुण्डोत्थितया कृत्यया । अभूच्चास्मिन्क्षणे यज्ञसमाप्तिः ।

राज्ञः पूर्वार्धमेवेशो वज्रकल्पमकल्पयत् ।
दुर्वासःप्रणयाद्देवी पश्चार्धं त्वतिकोमलम् ॥ ३४ ॥

भीमसेनः — दिष्ट्या, यतः,

ऊरू यावभिहत्यासौ दुश्शासनमचोदयत् ।
तयोर्देवीप्रसादेन गदाया गतिरस्ति मे ॥ ३५ ॥

नारदः — धर्मसूनो, कुत्र नु खलु वस्सर्वार्थसूत्रधारो भगवान् द्वारकानाथः ?

(प्रविश्य)

कृष्णः — देवर्षे, अयमस्मि । किमाज्ञापयसि ।

नारदः — कृष्ण, अयं भवदग्रजः प्राप्तो वत्सलाया वत्सलाया विवाहमनुचिन्तयन् ।

बलभद्रः — प्रवहणे भग्ने किं भाण्डविक्रयाभिकाङ्क्षया ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृष्णः** — आर्य, अभिवादये। समरोपग्रहान् दुर्योधनादीन् समयबन्धेनैव मोचयता मघवता वत्सस्याभिमन्योः विजय-प्रतिनन्दनार्थं वत्सलाविवाहस्सन्दिष्टः।

**मातलिः** — रौहिणेय, एवमेव (इति इन्द्रसन्देशं पुनः पठति।)

**वत्सला** — (स्वगतम्) दिष्ट्या अपक्रान्ते दुर्योधनघनपटले सुनिर्मला मे भाग्यपङ्क्तिरुन्मीलति।

**बलभद्रः** — कृष्ण, के वयमिन्द्रनियोगमतिवर्तितुम्। (स्वगतम्) विधिनियोगमिति वक्तव्यम्। कृष्णेन प्रत्यूहो भविष्यतीति वत्सामादाय हास्तिनमुपागतोऽहम्। तत्र प्रतिश्रुतसंबन्धं सुयोधन-मपश्यन्निह प्राप्तः पुनः कृष्णस्यैव हस्ते लग्नः।

**अभिमन्युः** — (स्वगतम्) हन्त प्रतिपन्नं अग्रयमातुलेनापि।

**कृष्णः** — वत्से, प्रणम गुरुजनम्।

**वत्सला** — (तथा करोति)

**युधिष्ठिरार्जुनौ** — कल्याणि, शोभनानामेकभाजनं भूयाः।

**अभिमन्युः** — (कृष्णसंज्ञया बलभद्रं प्रणमति) ज्येष्ठमातुल, अह-मभिमन्युरभिवादये।

**बलभद्रः** — इष्टेन युज्यस्व।

**युधिष्ठिरः** — हन्त भोः, महदिदं मे कल्याणसंमेळनम्।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अद्य भ्रातृसमागमे मघवतः प्राप्ते प्रसादे मह-
त्युद्वृत्ते च रिपौ गते प्रशमनं तुष्टे च दुर्वाससि ।
साह्ये चित्ररथे स्थिते परिणये प्राप्तेऽभिमन्योः पुरः
कृष्णे दृष्टदये च कोन्विह भवेन्मत्तोऽपि भाग्योत्तरः ॥

कृष्ण, बलभद्र, मातले, मित्र चित्ररथ, भगवन् नारद, वत्सयोरिहैवारुणदत्ताक्षयपात्रसौभाग्यभाजा मया अचिरात्सुमुहूर्ते विवाहो निर्वर्तनीय इति मे मनीषा । अनुजानन्तु भवन्तः । अथ चायं मां प्रोत्साहयन्निवाक्षयपात्रसौभाग्यसूतिः सविता कनकभृङ्गारकमनीयमण्डलः पुरः प्रादुर्भवति ।

**सर्वे** — परं नः प्रियम् ।

**धर्मसूनुः** — अस्मिंश्च महोत्सवे सर्वबन्धमोक्षः क्रियताम् । अनुनेतव्यश्च पातालात्प्रतिनिवृत्तः कुरुराजः सह परिवारैरापरिसमाप्ति विवाहमङ्गलमनुभवितुम् ॥

( प्रविश्य )

**सुदर्शनः** — जय जय, धर्मनन्दन, विभातप्रायेदानीं शर्वरी ।

तथाहि,

नैशं भित्वान्धकारं त्वमिव रिपुकृतानन्तरायाननन्तान्
दिक्पालैः पूर्णकुम्भो धृत इव धुरि ते भानुरेषोऽभ्युदेति ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शैलारोहावरोहक्रमभरविवशस्रंसिनो यस्य पादान्
पद्मिन्यो मर्दयन्ति श्लथकमलदलप्रायलोलाङ्गुलीकाः ॥

( चित्ररथेन संज्ञापिता गन्धर्वाः गान्धारप्रियसुमध्यमषड्जनिधयः देव-गान्धारीरागेण गायन्ति )

## ॥ गन्धर्वगीतम् ॥

मङ्गलं जय पाण्डुकुलमङ्गलप्रदीप ।
राजसूययाजिवर शासितावनीप ॥ १ ॥

धर्मपरिपालनार्थमाश्रितवनान्त ।
द्रौपदीभीमार्जुनाद्यैस्सेव्यमानोपान्त ॥ २ ॥

भास्करप्रसादभूतप्राप्तदिव्यामत्र ।
नित्यशः प्रवर्तितायुतविप्रभोजनसत्र ॥ ३ ॥

व्यासनारदभूरिभावितनित्यमङ्गलशील ।
लोमशादिमहर्षिवर्णितसच्चरित्रविलोल ॥ ४ ॥

गुह्यकाम्बुजिनीगतागतसंस्तुतानुजनुत ।
लब्धपाशुपतास्त्रसोदरशौर्यसंपदुदित ॥ ५ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गन्धमादनसानुमोचितनाहुषाजगरार्ते ।
नन्दनाश्रितसुन्दरीगणगीतनिर्मलकीर्ते ॥ ६ ॥

देवगायनवृन्दसन्दितशत्रुसंभृतदय ।
आनृशंस्यपर श्रिताखिललोकनिर्हृतभय ॥ ७ ॥

सिक्थकाशनमात्रतर्पितकोपनर्षिविनेत्रा ।
माधवेन समुन्नमन्निरपायमङ्गलपात्र ॥ ८ ॥

वासवप्रसादनिष्ठितवत्सलापरिणय ।
धर्मनन्दन धर्मवत्सल मङ्गलं जय जय ॥ ९ ॥

युधिष्ठिरः — भोः गन्धर्वराज, सुतरां मानितोऽस्मि भवता निर्व्याजबन्धुभूतेन । मातले, निवेद्यन्तां महेन्द्राय दासप्रणामाः । भगवन्नारद, अद्य समुत्तीर्णप्रायो मे सुविपुलश्शोकसागरः ।

नारदः — बाढम् । भगवति कृष्णे त्वयि प्रसन्ने किं न श्रेयस्ते हस्तगतम् ।

कृष्णः — धर्मसूनो, किं ते भूयः प्रियमुपहरामि ।

युधिष्ठिरः — अवाप्तकल्याणोऽहमस्मि तव प्रसादात् । तथापी-दमस्तु भरतवाक्यम् ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सन्तस्सन्तु निरन्तरप्रियजुषस्साहित्यमुन्मीलतु
प्राप्य व्यक्तिपरम्पराममृतनिश्च्योतैः कलाकन्दलैः ।
अप्यास्वादविदां प्रसादसुधया नीरन्ध्रमाप्यायितं
कर्मेदं परिचीयमानसुषमं ख्यातिं परां विन्दतु ॥

( निष्क्रान्ताः सर्वे । )

इति सप्तमोऽङ्कः ॥

इति श्रीमद्भरद्वाजकुलतिलकश्रीमदप्पय्यदीक्षितेन्द्रवंशमुक्ताफलानां महामहोपाध्याय राजुशास्त्र्याख्याविख्यातश्रीत्यागराजमखिराजानां प्रपौत्रेण, महामहोपाध्याय शास्त्ररत्नाकरादिबिरुदाङ्कितश्रीयज्ञस्वामिशास्त्रिवर्याणामात्मजेन श्रीमन्महालिङ्गकविना विरचितमिदं प्रतिराजसूयं नाम नाटकं समाप्तम् ॥

॥ शुभं भूयात् ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ श्लोकानुक्रमणिका ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ॥ शुद्धाशुद्धपत्रिका ॥

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| XI | 21 | helpnessness | helplessness |
| ४० | १७ | स्यस्मीभि | स्यमीभि |
| ७६ | १६ | प्रस्थास्यति | प्रस्थास्यते |
| १०४ | १० | संशप्तकसैन्य | दृप्तासुरसैन्य |
| ,, | १२ | संशप्तकानप्याजघान | निवातकवचानप्याजघान |
| १६१ | १५ | मासादयामास | माससाद |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ERRATA

| Page | Line | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| XI | 21 | helpnessness | helplessness |
| 33 | 11 | विपक्षीयन्ते | विपक्षायन्ते |
| 39 | 18 | तुमुलभूयात् | तुमुलीभवेत् |
| 40 | 17 | स्यस्मीभि | स्यमीभि |
| 43 | 7 | समवरुद्धयति | समवरुणद्धि |
| 61 | 10 | दृढयति | द्रढयति |
| 76 | 16 | प्रस्थास्यति | प्रस्थास्यते |
| 77 | 18 | भविष्यमाणे | भविष्यति |
| 79 | 9 | अनुगृहीतव्य | अनुग्रहीतव्य |
| 97 | 5 | पराङ्मुख्यं | अनौन्मुख्यं |
| 98 | 1 | प्रतिगृहीतव्य | प्रतिग्रहीतव्य |
| 104 | 10 | संशप्तकसैन्य | दप्तासुरसैन्य |
| ,, | 12 | संशप्तकानप्याजघान | निवातकवचानप्याजघान |
| 111 | 16 | अध्यवस्य | अध्यवसाय |
| 116 | 12 | समजीघटत् | समजीघाटिष्ट |
| 135 | 6 | विपिनोदरः | विपिनोदरम् |
| ,, | 17 | भिन्दन्त्य | भिन्दत्य |
| 141 | 8 | नयनेऽद्य मे | नयने ममा |
| 144 | 3 | निजपदमधिरोप्य हन्त | निजपदमापितमेव |
| 157 | 18 | भ्रातृवर्गस्य | भर्तृवर्गस्य |
| 161 | 15 | मासादयामास | मासत्ताद |
| 172 | 3–4 | परावर्तमानः | परावर्तयन् |

O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Ko

# SAHITYA CANDRASALA

## LIST OF PUBLICATIONS-1957

---

**PROSE:**

**For Sanskrit Pupils in High Schools:**

| | | | |
|---|---|---|---|
| LAGHURAMA CARITAM 1927, 1931 (no stock) | | | |
| UPAKRAMA PATHAVALI 1937 | 0 | 10 | 0 |
| MADHYAMA PATHAVALI 1938, 1947 | 0 | 12 | 0 |
| PRAUDHA PATHAVALI 1938, 1945 | 0 | 12 | 0 |
| PRAVESA PATHAVALI 1947 | 0 | 10 | 0 |
| SAMBHU CARYOPADESA 1931 *(Foreword by Diwan Bahadur K. S. Ramaswami Sastri)* | 0 | 4 | 0 |

**For College Students:**

| | | | |
|---|---|---|---|
| BHASAKATHASARA complete in one Volume 1939 (out of stock) | | | |
| BHASAKATHASARA *(with a Foreword by Professor A. B. Keith)* Part I. 1955 | 0 | 12 | 0 |
| ,, Part II. 1936 | 0 | 8 | 0 |
| ,, Part III. 1955 | 1 | 4 | 0 |
| Notes and Translation to Part I. (out of stock) | | | |
| ,, Part III. | 0 | 8 | 0 |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

These parts have been prescribed texts in the South Indian Universities of Madras, Mysore, Andhra, Annamalai and Travancore and have been several times reprinted.

POEMS:

| | | | |
|---|---|---|---|
| KINKINIMALA 1934 (A collection of fifty shorter lyrics including several songs and poems and translations from English Literature.) | 2 | 0 | 0 |
| DRAVIDARYA SUBHASHITA SAPTATI 1952 (Foreword by Justice N. Chandrasekhara Iyer, Supreme Court | 1 | 0 | 0 |
| VYAJOKTIRATNAVALI 1953 (with English Translation and Introduction) | 2 | 0 | 0 |
| DESIKENDRA STAVANJALI 1954 (with a Foreword by K. Balasubramanya Iyer) | 0 | 8 | 0 |
| BHRAMARASANDESA 1954 (Foreword by N. Raghunatha Iyer, Asst. Editor, The Hindu, Madras.) | 1 | 8 | 0 |
| VANALATA 1955 (A Lyric Poem in 5 Cantos, with a Foreword by Professor M. R. Rajagopala Iyengar) | 1 | 0 | 0 |

DRAMAS:

| | | | |
|---|---|---|---|
| KAUNDINYAPRAHASANAM 1930 (a Comic Play) | 0 | 8 | 0 |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

KALIPRADURBHAVAM 1956 (in 7 Acts with a Preface by Justice T. L. Venkatarama Iyer, Supreme Court) 1 0 0

SRINGARANARADIYAM 1956 2 0 0
( With Preface by Dr. V. Raghavan. )

PRATIRAJASUYAM 1957 (With Foreword by K. Balasubrahmanya Iyer. )
Library Edition 6 0 0
Ordinary Edition 5 0 0

---

*Apply to:—* **SAHITYA CANDRASALA,**
Tiruvalangadu, P. O., (via) Narasingampet. Tanjore Dt.
(Madras State)

---

# Other works of the Author in manuscripts

**Dramas:**

1. उद्घातृदशाननम्—A Nataka in seven Acts celebrating Ravana's attempt to uproot Kailasa.
2. आदिकाव्योदयम्—A Prakarana in ten Acts with the Adi Kavya itself as the 'hero'.
3. उभयरूपकम्—A social comedy depicting the convulsions of the present age.
4. मर्कटमार्दलिकभाणः—A farcical monologue.

**Poems:**

1. पुष्पोपहारः—A collection of fourteen stotras.
2. मणिमाला—A collection of longer poems.
3. प्रशस्तिप्रगुणमालिका—A collection of laudatory poems.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

4. More shorter poems — किङ्किणीमाला Second Series.
5. Second Part to व्याजोक्तिरत्नावली
6. Miscellaneous poems and diary slokas.
7. भारतीविषादः —An allegory on the present day condition of Sanskrit.
8. महामहिषसप्ततिः —A Satire
9. लघुपाण्डवचरितम् —(incomplete)
10. शृङ्गाररसमञ्जरी । A century of erotic stanzas.
11. श्रीवल्लभसुभाषितानि –(incomplete) Tiruvalluvar's moral aphorisms.
12. Uttarakanda—A supplement to लघुरामचरितम् (incomplete)

**Prose:**

1. गद्यकथानककोशः — Stories in Prose.
2. संकथासन्दोहः — Some family biographies and anecdotes, including the diaries of my great-grandfather's father.

**Literary Criticism:**

कविकाव्यनिकषः —(Karikas only)

**Grammar:**

संस्कृतलाघवम् — For High School Students.

**Music:**

Kirtanas and Raga-Malikas in Sanskrit, completely equipped with Swara schemes.

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosh

